

" श्रीमद्विजयानन्दसूरिचरणकमलेभ्यो :

" श्रीमद्विजयवल्लभसूरिचरणकमलेभ्यो नमः "

# अथ सुदर्शनाचरित्रम् ।

श्रीनाभेयजिनेश्वरोऽच्छमहिमा श्रीआचिरेयस्तथा । श्रीनेमी रमणीपराङ्मुखमतिः श्रीपार्श्वनाथः प्रभुः ।
श्रीवीरो नतधीरवीरनिकरश्चैते प्रमोदप्रदाः । स्युः कल्याणकराः प्रसन्नमनसः पंचापि तीर्थेश्वराः ॥ १ ॥
सन्तु भद्रङ्कराः सर्वे, तीर्थनाथा जगद्धिताः । सन्तु कल्याणकर्तारो, गौतमाद्या महर्षयः ॥ २ ॥
यस्याः प्रसादमासाद्य, जडोऽपि धिषणायते । शारदाम्भोजवदना, शारदा साऽस्तु सिद्धये ॥ ३ ॥
कमलविजयान् सूरीन्, बाल्यतो ब्रह्मचारिणः । नत्वा परमया भक्त्या, स्मृत्वा वागीश्वरीं हृदि ॥ ४ ॥
वल्लभविजयं नत्वा, मुहुर्गुरुगुरुं गुरुम् । वक्ष्ये सुदर्शनायाश्च चरितं गद्यबन्धतः ॥ ५ ॥

प्राकृतं पद्यबन्धेन, कृतं देवेन्द्रसूरिभिः । समालंब्य तदुक्तानि पुनः संस्क्रियते मया ॥ ६ ॥
बालक्रीडामिमां कुर्वन्नस्यां हास्यो विपश्चिताम् । यतो नेयं तदर्थाय, किन्तु बालोपकारिणी ॥ ७ ॥

तथाच तत्पद्यानि—

" वंदित्तु सुव्वयजिणं, सुदरिसणाए पुरम्मि भरुयच्छे । जह सव्वलियाविहारो, काराविओ किंपि तह वुच्छं ॥१॥ "
" जह तीइइ पढमजम्मे विजयाखयरीइ मारिओ सप्पो । जह सा संतिजिणगिहे पूयं दट्ठुं पुलइयंगा ॥ २ ॥ "
" पच्चा सुबोहिबीयं वेयावच्चं च कासि समणीणं । हरियं च नेउरं जह, भरुयच्छे सवलिया जाया ॥ ३ ॥ "
" जह बाहहयानवकारसवणओ सिंहलेसरस्स सुआ । ओपन्ना जाइसरा, जह भरुयच्छंमि संपत्ता ॥ ४ ॥ "
" अस्सावबोहतित्थे, कारविउं सव्वलियाविहारवरं । विहियाणसणा पत्ता, जह ईसाणे तह कहेमि ॥ ५ ॥ "
" इय सुयणु कमलबोहणरविव्व सुकहा अदिट्ठदोसेयं । अकलंकिया य नवससहरुव्व सज्जणमणाणंदा ॥ ६ ॥ "
" एयं कहाइयंगं बुहजणमणजणियसंवेगो । अवणेइ विसयसंगं कुणइ सुणंताण सिवरंगं ॥ ७ ॥ "
" अह एयं सव्वं पिहु साहिस्सं वित्थरेण सपसंगं । भवभयभीया भव्वा ताणि सुणह सावहाणमणा ॥ ८ ॥ "

अस्त्यत्र दक्षिणार्धभरतक्षेत्रस्य मध्यखण्डे उन्नतानेकशिखरो नन्दिवर्धनो नाम पर्वतः । तस्याग्नेयदिशायां सुस्थितजनाढ्यं सकललक्ष्मीस्थानभूतं द्विजाद्यनेकजनाकीर्णं हिरण्यपुरं नाम नगरम् । तत्र धर्मपालनतत्परमतिर्वर्धमाननामा श्रेष्ठी वसतिस्म । धनवती च तस्य प्रियाभूत् । ज्ञातजीवाजीवादितत्त्वः उत्तमसत्त्वः त्यक्तप्रमादो धृतदृढसम्यक्त्वानुरागः सामायिक-

पौषधादिक्रियाप्रसक्तो जिनवरनामस्मरणसंतुष्टमानसश्चातुर्गतिकसंसारभ्रमणत्रस्तस्वान्तो विहितदेवगुरुविनयो जिनेन्द्रधर्मलब्धपरमार्थो मोक्षसुखकारणीभूतसम्यक्त्वतरणिकिरणनिकरनिराकृततमःस्तोमः दानादिगुणप्रवृत्तो धनपालनामा तयोः पुत्र आसीत्, तस्य च स्वभावतो ह्युपशान्ता सुविनीता भ्रातृवत्सला स्वच्छमानसा श्रीजिनप्रणीतधर्मरता धन्ना नाम्नी लघुभगिनी बभूव, प्रकृतिभद्रको भाविभद्रो भद्रधर्मश्रवणरुचिर्धर्मपालाभिधस्तद्वयस्योऽभूत् । अथान्यदा च सहसोत्पन्नरोगातङ्कैः पीडिता सती सा धन्ना पञ्चपरमेष्ठिस्मरणपरा मृत्वा समुत्पन्ना स्वर्गे । ततश्च तस्या मृतकार्यं विधाय वैराग्यं संगतः सन् स बुद्धिमान् धनपालो मित्रसंयुतो रैवताचलं जगाम । तत्र च बालब्रह्मचारिणं द्वाविंशतितमं जिनं नत्वा पश्चान्निवृत्तो निजगृहं प्राप्तवान् ।

अथैकदा प्रस्तावे विस्मितमनसा तत्प्रियया धनश्रिया पृष्टोऽयम्–यथा हे प्राणाधीश ! भवद्भिः पूर्वमपि बहुशः रैवताचले नेमिजिनो नतः । इदानीमपि समित्रैर्भवद्भिः कृता तद्यात्रा । अतोऽहं पृच्छामि युष्मान् प्रति । तत्र रैवताचले कर्कशपाषाणविषमशिखरेषु ध्यानस्थिता मुनयः किन्नरगणैः स्तुताः श्रूयन्ते तत् किं सत्यं ? अन्यच्च ऐरावतखरखुराग्रक्षोभितभूमिप्रदेशाः शोभन्ते तत्र ? जलनिर्झरझांकारशब्दास्तत्र नितरां श्रूयन्ते ? तच्छ्रुत्वा प्रफुल्लवदनो धनपालः प्राह–हे प्राणेश्वरि ! सत्यमिदं सर्वं नह्यत्रानृतं किंचिदपि । शृणु तावदन्यदपि यन्मया दृष्टमनुभूतं च तत्र महदाश्चर्यम् । अत्र भगिनीमरणसमुत्पन्नगुरुवैराग्यः समित्रो गतवानहं रैवताचले वंदितुं देवाधिदेवप्रतिमाः । तत्र संप्राप्तश्च प्रक्षालितनिजाङ्गः श्वेतवस्त्रविहितोत्तरासङ्गः सहितश्च पूजोपकरणैः, प्रविश्य विधिना जिनमन्दिरे, विधाय च प्रदक्षिणात्रितयं, पूजयित्वा च बाल्यतोऽपि

ब्रह्मचारिणं नेमिनाथं भुवनगुरुं परया भक्त्या, प्रत्युपास्य च सकलमपि दिनं तं प्रभुं, आशातनाभीरुर्निर्गच्छामि यावद्वहिश्चैत्यगृहात्तावत् दिव्यरूपधरां कांचन नारीं तत्रागतामपश्यम् । तया च कररुहाग्रैर्वीणातंत्रीं प्रवाद्य मधुरस्वरेण कृत्वा च गानं जिनगुणानां, स्तुत्वा च जगद्बान्धवं देवाधिदेवं, संभाषितोऽहं सप्रणयम् । समये पृष्टा सा मयापीत्थं हे सुन्दरि ! त्वं कुतो देशादिहागतासि ? हे सुभ्रु ! देवी मानुषी वा त्वं ? किं चास्ति भद्रे ! तवाभिधानं ? । इति मदुक्तिं श्रुत्वा सा प्राह, हे भ्रातः ! अस्तीयं मे कथा महती ततः शृणूपविश्यात्र शुचिप्रदेशे, अस्ति यदि ते कर्णकुतूहलम् । ततोऽहमपि प्रमोदमानमानसः समित्र उपाविशं तत्रैव रमणीये प्रदेशे । साऽपि कथयितुमारेभे—

अयि प्रियबन्धो ! मनुष्यत्वपरिभ्रष्टा सती मिथ्यात्वमोहिता यथाऽहं संसारसागरे परिभ्रमामि शृणु तत् सावधानमनाः। तद्यथा—अस्त्यत्र दक्षिणस्यां दिशि मलयगिरिमण्डितो मलयाभिधो देशः । तत्र ऋधिसमृद्धा मलयवती नाम नगरी। महासेनो नाम नृपतिस्तत्र राज्यं चकार । अथैकदा पाटलीपुत्रपत्तनाधिपतिना जयमहाराजेन निजदूतमुखेनैवं विज्ञप्तः सः हे नृपते ! अस्ति भुवनाद्भुतवररूपा चंपकमाला नाम मे पुत्री । सा पुनः पाणिग्रहणं न मन्यते । अथैकदा मम चित्रकरेण तव रूपं लिखित्वा दर्शितं तस्याः । दृष्ट्वा च सहसा जाता सानुरागा त्वयि । ज्ञात्वा तद्वृत्तान्तं कथमपि मया सा कन्या मनसा तव दत्ता अतः तत्पाणिग्रहणार्थं सुदिवसे तत्रागन्तुमर्हसि ।

श्रुत्वा चेदं राजा सकलमपि राज्यकार्यं मन्त्रिमण्डले आरोप्य पंचभिः प्रवहणैर्हृष्टहृदयस्ततश्चचाल तत्पुरं प्रति । तदा च प्रतिकूलपवनप्रेरितेषु दिशोदिशं गतवत्सु प्रवहणेषु लग्नं राज्ञः प्रवहणं कथमपि मलयगिरौ । भग्नश्च तदास्फालितः । अपि च,–

सुहकंखिरो नरिंदो, पडिओ विसमावयासु किमु अहवा। विसयासत्ता सत्ता, लहंति दुःखाइं किं चुज्जं ॥९॥ गहनेऽपारे दुःखावहे च तत्र जलधौ भाविभव्येन भव्येन मनुष्यभव इव लब्धः स विमलनामा नगाधिराजः आरूढश्च तत्र क्षुधातृषाशोषिततनुः शनैः शनैर्नृपः दृष्टं च तत्र रम्यं जिनगृहं चतुर्द्वारमण्डितम्। तद्द्वारदेशे विमलकमलपूर्णां अतिविशालां वापीं दृष्ट्वा तत्र प्रविश्य तज्जले स्नात्वा स्वस्थः सन्निर्जगाम बहिर्वाप्याः। अथैकस्मिन् शिशिरभूभागे उपविष्टो नृपतिर्यावच्चैत्याभिमुखं पश्यति तावद् दृष्टं पादुकायुग्मम्। दृष्ट्वा च चिन्तयामास—यः कोऽपि देवताभक्तोऽत्रायाति नित्यं तस्यैतत् संभाव्यते इति विचारारूढो यावच्चैत्यान्तर्ददाति दृष्टिं तावत्तत्र किंचित् स्त्रीरत्नं ददर्श। विलोक्य च चेतश्चमत्कारकारिणीं तां चिन्तयामास चेतसि। लावण्यरूपसौभाग्यसंगता इयं येन विधात्रा निर्मिताऽस्य गुणकीर्तनेऽपि स एव समर्थः स्यात्। सापि कृतमुखकोशा धृतपरमतोषा एकाग्रमानसा सुगन्धिवरकुसुमैरानर्च श्रीमुनिसुव्रततीर्थपतिप्रतिमाम् विधाय च द्रव्यस्तवं भुवनगुरोः निर्भरभक्तिभरसंभृतहृदया एवं तुष्टाव—

हे संप्राप्तविमलकेवल! केवलबलहतत्रिभुवनमोह! मोहमहाभटभञ्जक! हे मुनिसुव्रतजिनवरेन्द्र! पुलकिताङ्गतया यैस्तव मुखकमलं न विलोकितं ते हीनदीनमुखाः सदा परमुखं पश्यन्ति। यैस्तु तव पदकमलं भक्त्या नाभिनतं ते सर्वजनानां पादेषु पतनशीला भवन्ति। हे त्रिभुवनविभो! यैर्मूढैस्तव सेवा न विहितास्ते 'जी जी' शब्दं प्रयुञ्जानाः सामान्यजनानामपि सेवका भवन्ति। यैः करैस्त्वं नार्चितः, यया च जिह्वया त्वं न स्तुतः, यैश्च नेत्रैस्त्वं नेक्षितः, ते हि कराः, सा च जिह्वा, तानि च

१ सुखकांक्षको नरेन्द्रः, पतितो विषमापदासु किमथवा। विषयासक्ताः सत्त्वाः, लभन्ते दुःखानि किं चित्रम्?।

नेत्राणि, सर्वमपि व्यर्थम् । हे नाथ ! पूर्वं यैस्त्वं नाराधितस्ते आधिव्याधिविधुराः सुचिरं दुःसहं दुःखं सहन्ते[1] । हे लोकनाथ ! संप्रति त्वमेव मे माता पिता भ्राता प्रभुर्गुरुः । त्वमेव मे शरणम् । त्वां प्रति एकाग्रचित्तस्य जन्तोर्यद्भाव्यं तद्भवतु । हे देवेन्द्रमुनीन्द्रवन्दितक्रमकमल ! मुनिसुव्रतप्रभो ! मत्कृतापराधं क्षमस्व । देहि मे शीघ्रं मोक्षसौख्यं इति स्तुत्वा हे भ्रातर्धनपाल ! यावत् सा निस्सरति जिनगृहात् तावत्तत्र शिलापट्टे निषण्णं चंद्रवत्सौम्याकारं सूर्यमिवोग्रतपस्तेजसं मूर्तिमन्तं धर्ममिव चण्डवेगनामानं मुनिं ददर्श । दृष्ट्वा च तं प्रसन्नवदना जगाम तत्संनिधौ । अवन्दत च सबहुमानं । सोऽपि मुनिपुङ्गवः 'हे चंपकलते' इति जल्पन् सुरनर–शिवसुख–दायकं ददौ धर्मलाभम् । निजनामश्रवणसंजातविस्मया सापि कृताञ्जलिपुटा उपविष्टा तत्र शुद्धे महीपीठे पुरतस्तस्य महामुनेः । राजा महासेनस्तु मोहितस्तद्रूपेण कौतुकाविष्टहृदयस्तां पश्यन् शृणोति तद्वचनं मुनेः ।

मुनिराह—हे भद्रे ! चम्पकलते ! मनुष्यत्वं लब्ध्वा धर्मकथैव कर्तव्या । विकथा तु दूरत एव वर्ज्या । राजस्त्रीभक्तजनपदकथा न कर्तव्या । नैव च श्रोतव्या, आक्षेपणीप्रमुखाश्चतुर्विधाः कथास्तु कर्तव्याः । आक्षेपण्यादिस्वरूपं त्विदम् " या मधुरगम्भीरशब्दा सुयुक्तियुक्ताऽपूर्वचित्रार्था । यया च जीवो जिनवचने आकृष्यते, साऽऽक्षेपणी नाम्नी । " परव्यपदेशेन कृतां यां तु शृण्वानो जीवः कुशास्त्रेभ्यो विरज्यते, सा विक्षेपणी नाम्नी द्वितीया । यां कथां श्रुत्वा जनोऽभिलषति शुभमचलमक्षयमव्याबाधं मोक्षसुखं, सा खलु संवेदनी नाम्नी तृतीया । बहु आधिव्याधिनिकेतनाज्जन्मजरामरणदारुणात् संसारात् यां श्रुत्वा जनो विरज्यते, सा निर्वेदनी नामा चतुर्थी । श्रोतुकामायां विनीतायां परिषदि

१ ताच्छील्ये आनश् ।

सामर्थ्ययुक्तेन गीतार्थेन यतिना एताभिः कथाभिर्धर्मः कथयितव्यः । यतः—

अत्र तिस्रः कथाः कारणभूताः चतुर्थी तु कार्यम्, इयं हि वैराग्यभावजननी निर्वेदकरणी च ।

तथाहि—अयं जीवो द्रव्यार्थिकेन नयेन शाश्वतः, पर्यायार्थिकेन त्वशाश्वतः, तथा च कालः कर्म च उपलक्षणात्, पदार्थषट्कं जिनोपदिष्टं ग्राह्यम् । इदं विश्वमुपचारेण काले वर्तते, यतो हि काल औपचारिकं द्रव्यम्; अयं च जीवोऽनादिकर्मसंयोगेन शरीरं प्राप्नोति तथा च भ्रमति पृथ्वीजलतेजोवायुवनस्पतिषु अनारतं, विधाय च स्थितिं बहुकालं स्थावरकाये, प्राप्नोति त्रसत्वं पुण्ययोगतः, ततोऽपि यदि लघुकर्मा भवति तदा पञ्चेन्द्रियत्वमासादयति, ततोऽप्यधिकतरसुकृतसंचयेन मनुजत्वम्, लब्धेऽपि दुर्लभे मानुषे भवे यदि पुण्यहीनस्तदार्यक्षेत्रे जन्म न लभते, कदाचित् कर्म लाघवात् तदपि लब्धं, परन्तु सत्कुले जन्मप्राप्तिर्महता भाग्ययोगेनैव प्राप्यते, तदपि प्राप्तं परंच पञ्चेन्द्रियपटुत्वं बलवत्त्वं पुण्येन विना नहि लभ्यते, लब्धेऽप्यस्मिन् कारणकलापे, कश्चित् अल्पायुर्भवति, व्याधिग्रस्तो वा जायते, प्रबलपुण्ययोगेनैव नीरुग् दीर्घायुश्च भवति, सत्यपि तस्मिन् विवेकविकलो जीव आलस्यादिभिर्धर्माभिमुखतां न गच्छति, प्राप्तेऽपि श्रीजिनधर्मे दर्शनमोहनीयकर्मण उदयेन शङ्काकलुषितमनाः जिनवचनं नैव श्रद्दधाति, अथ चाधिगतसम्यक्त्वोऽपि संशयशीलस्सन् उत्सर्गापवादसंगतं सूत्रं यथावस्थितं न जानाति, तस्याऽपि उपरमे पदार्थस्वरूपं यथार्थं श्रद्दधानोऽन्यं चोपदिशन्नपि चारित्रमोहनीयकर्मण उदयेन न शक्नोति कर्तुं तपः संयमम्, अथ च क्षीणे चारित्रमोहे य कश्चित् पुण्यात्मा यथाशक्ति विदधाति विमलं तपोऽनुष्ठानम्, स आलिङ्गति शीघ्रं शिवसुन्दरीम् । भणितमिदं नष्टाष्टकर्मकष्टैः सर्वज्ञैः सर्वदर्शिभिः । यदागमः—

चुल्लगपासगधन्ने, जूए रयणे य सुमिणचक्के य । चम्मे जुगपरमाणू दस दिट्ठंता मणुयजम्मे ॥ १ ॥

शास्त्रविहितैतद्दृष्टान्तानां दशकेन मानुष्यादिसामग्रीं दुर्लभां ज्ञात्वा लब्ध्वा च जिनेन्द्रधर्मं धर्म एव कर्तव्य इति । इत्थं हि जिनधर्मकथा जिनमुनिसंघजिनचैत्याद्यनुगता च कथा भावेन क्रियमाणा नाशयति चिरसंचितं पापम् ।

इति बुधकमलदिनकरप्रभाकल्पायां सुदर्शनाकथायां कथाबन्धनामा प्रथमः प्रस्तावः समाप्तः ॥ १ ॥

## " अथ द्वितीयः प्रस्तावः "

ततो हे भ्रातः, चम्पकलता मुनिं पप्रच्छ । यथा—हे प्रभो । इदं चैत्यं केन कारितम् ? तदा स चण्डवेगनामा मुनिरुवाच—हे भद्रे ! इदं चैत्यं सुदर्शना नाम्न्या राजपुत्र्या कारितम् । अथ चेत् " सा का ? " इति तच्चरित्रश्रवणेच्छा बोभूयते तदा शृणु तद्वृत्तान्तम्—

अस्त्यत्र जम्बूद्वीपस्य भरतार्धदक्षिणभागे धर्मार्थकामभोक्षाणां कारणं मध्यमं खण्डम् । तद्दक्षिणभागे लवणसमुद्रतीरे सर्वद्वीपनिरोमणिः सिंहलनामा द्वीपोऽस्ति । तत्र सर्वलक्ष्मीशिवासं श्रीपुरं नाम नगरम् । मन्ये यद्गुणस्वरूपवर्णने बुधोऽपि मन्दतां भेजे । कनकमयप्राकारतोरणविरचितशिखिकीरशारिकादीनां समानचित्ररचनाभिर्यत्रत्या जनाः स्वकीयभवनान्यपि विस्मरन्ति । यत्र रविकिरणत्रस्ततमःस्तोमः प्रासादस्थस्तम्भस्थितमणिकिरणगणैर्ग्रस्यते । बन्धस्तु यत्र कविकृतकाव्यानामेव । कृतदोषस्सन् यत्र चन्द्र एव ग्रस्यते । दण्डस्तु यत्र छत्रवेधेष्वेव । यत्रत्यो लोकसमुदायो भीतः परलोकतः, न तु परलोकतः[1] ।

---

१ शत्रुजनात् ।

तत्रेदं महदाश्चर्यं यत् कषायपरिणामदुःखभीताभिः मानिनीभिरपि मानस्त्यज्यते। तत्र दुःसहप्रतापनिर्दलितप्रतिपक्षिदर्पो रूपविजितकन्दर्पो निर्मलतरयशश्चन्द्रश्चन्द्रगुप्तनामा राजा राज्यं चकार। लोकप्रसिद्धं तु तस्याभिधानं शिलामेघ इति बभूव, स च शक्तित्रयसंयुक्तो गुरुसत्त्वो दानतपोविक्रमबलेन प्रवर्धमानप्रताप आसीत्। स च नृपतिर्युवतीनां, बुधजनानां, शत्रूणां च मनसि कामरूपेण, बृहस्पतिरूपेण, यमरूपेण च विवेश। स च राजा स्वयं भीतिरहितोऽपि सिंहबाल इव परेषां भयं ददाति। स्वजनकुमुदानां च शारदशशीव हर्षभरं करोति। अकलङ्का जननयनसुखकारिणी नवीनचन्द्रलेखा समाना चन्द्रलेखाभिधाना तस्य प्रियाऽभूत्। किन्तु सा नवेन्दुलेखेव न मनागपि वक्रतामवगाहते स्म। मन्ये, यस्या निरुपमं सौभाग्यसंगतं उदारं रूपं निरीक्ष्य विलयं प्राप्ता इव देवाङ्गना दृष्टिपथं नायान्ति। तस्याः भद्रकाः संपूर्ण पुण्यलावण्यसंयुक्ताः सप्त पुत्राः संजाताः। ये सप्तर्षय इव चन्द्रलेखाविराजमाना भृशं शोभां प्रापुः। अथान्यदा श्रीपुरनगरे चंद्रश्रेष्ठी चैत्येऽष्टाह्निकामहोत्सवं कारयतिस्म। रथ्याचतुष्कत्रिकचत्वरेषु अमारिमुद्घोषयति। भक्त्या साधुभ्यो दानं ददाति। करुणया च दुःस्थितानामपि कामं पूरयति तस्य च वर्धापनकृते सर्वोऽपि लोक आगच्छति। आगच्छद्गच्छल्लोकानां संकीर्णत्वाद् मार्गोऽपि न प्राप्यते। तदा च कमला धात्री चन्द्रलेखया पृष्टा। हे मातः! श्रेष्ठिगृहे केन कार्येण वर्धापनं जायते? सा भणति अस्य चन्द्रसौम्यवदनः परदेशे गतोऽर्जितबहुधनः सोमनामा पुत्रोऽद्य कुशलेन स्वगृहं प्राप्त इति। एतदाकर्ण्य देवी चन्द्रलेखा प्राह—हे मातः! यदि इत्थं, तदा तत्रापि तत्र गमनमुचितम् यतो हि उचितप्रतिपत्तिवियुक्तो महानपि अवज्ञामाप्नोति। यतः—

आरङ्काद्भूपतिं यावदौचित्यं न विदन्ति ये। स्पृहयन्तः प्रभुत्वाय खेलनं ते सुमेधसाम् ॥ १ ॥

तदा च सा धात्री प्राह—वत्से ! तस्य श्रेष्ठिनो गृहे लोका न मान्ति । ततो देव्या कथितम् । तत्रान्यत् हि किं कारणं? सा भणति । तत्र काचित् स्त्री वर्तते सा च खलु समस्तस्त्रीप्रशस्तगुणकलिताऽस्ति । अतो हि तं स्त्रीरत्नं द्रष्टुं सर्वोऽपि जनो व्रजति । सा युवती निजरूपेण अमरसुन्दरीरपि पराभवपदं नयति । यूथभ्रष्टा हरिणीव अपहृतचेष्टा सा न हसति । न जल्पति। प्रमुदितमपि जनं न विलोकयति । भद्रे ! "सुन्दरि ! सुन्दरि !" इति लोकैर्भृशमालापिताऽपि, सादरं नामादिकं पृष्टाऽपि न किमपि वक्ति । यः पुनः तस्या रूपं निरीक्षते स प्रनष्टसंज्ञः सन् पार्श्वस्थितः चित्रलिखित इव भवति । इति तद्वचनजनित-कौतुकया देव्या भणितम् । हे कमले ! यद्येवं ततो गच्छ शीघ्रं तत्र श्रेष्ठिनो गृहे । सपरिवारस्य तस्य श्रेष्ठिपुत्रस्य " कल्पे प्रभातसमये भोजनार्थमागन्तव्यं " इति निमन्त्रणं कुरु । तदा च देवीवचनेन तत्र गत्वा कमलया सपरिकरः श्रेष्ठिपुत्रो निम-न्त्रितः, जाते प्रभातसमये विहितायां सरसरसवत्यां सस्नेहं सपरिवारः श्रेष्ठिपुत्र आहूतोऽत्याग्रहे कृते सति निरुपमसौन्दर्यमूर्तिः सा सुंदर्यपि तत्रागता । आगच्छन्ती सा चन्द्रलेखया दूरादप्युपलक्षिता । गुरुगौरवेण सपरिवारं भोजयित्वा, वस्त्रादिभिः संमान्य च, श्रेष्ठिपुत्रः संप्रेषितो निजभवने । तदा च सा सुन्दरी देव्या मधुरवाक्यैरित्थं भणिता । हे भगिनि ! यावत् त्वत्कृते किंचिद्वस्तु आनयामि तावत् मुहूर्तमात्रं मम पार्श्वे त्वं तिष्ठ । इत्थं वदन्त्या तया चन्द्रलेखाभिधया देव्या बलादपि सा सुन्दरी निजमासने निवेशिता । एकान्तमवलम्ब्य मृदुवचनैर्भणिता च । हे भगिनि ! एतादृशे वयसि रूपे च सति काऽस्ति ते मनसि चिन्ता ? येन त्वं क्षीणतनुरुपलक्ष्यसे । हे भद्रे ! किमस्ति दुःखं ते मनसि ! शिशिरे हिमकदर्थितं नलिनमिव तव सर्वमिदं शरीरं कान्तिशून्यं कथं दृश्यते ? हे सुतनु ! शृण मदुक्तमन्यदपि । यत्किंचिद्दुःखकारणं ते भविष्यति यदि तत्साध्यं

तदाऽवश्यं प्रयतिष्ये तदुच्छित्तये । तस्मात् हे कुरङ्गाक्षि ! स्तोकमपि खेदं मनसि मा धारय । इति चन्द्रलेखावचनं श्रुत्वा सुन्दरी प्राह—हे भगिनि ! हे बुद्धिमति ! साधुजननिन्दितेन लज्जाप्रदेन मम संबन्धश्रवणेन का सिद्धिस्ते ? अपि च—

विसयासत्ता पियविरहजलनजालाइ डज्झंता । पावइ इहेव दुःखं, तिक्खं ता किं विचारेण ? ॥ १ ॥

इति श्रुत्वा भणितं महाराज्ञ्या चन्द्रलेखया । हे तन्वि ! अलमिदं सर्वं किमाग्रहेणात्र कर्मणि मे ? किन्तु अद्यप्रभृति प्रतिपद्यस्व भगिनीभावं मया समम् । किमन्येन बहुनोक्तेन ? अत्रान्तरे साशङ्कमनाः प्राभृतहस्तः श्रेष्ठी अपि आजगाम तत्र मन्दिरे देव्याः । सभयस्सन्नुवाच देवीं विनयेन । हे स्वामिनि ! समुद्रमध्ये विमलशैल—पर्वतशिखरे एकाकिनी भ्रमन्ती सतीयं सुन्दरी मम सुतेन दृष्टा । अनुमितं च तेन यथेयं खलु अस्ति कस्यचिन्नृपतेः कन्या । केनचिद्विद्याधरेण हृता सती अत्राऽऽजगाम । इति ज्ञात्वा भगिनीभावं च प्रतिपद्य अत्रानीतास्ति । ममापि पुत्रीव प्रीतिपात्रम् । विशेषतस्तु गुणैर्गौरवं प्राप्ता इयं मदीयपार्श्वेऽतिष्ठत् । इदानीं तव पार्श्वे स्थितिं कुर्वाणा तवापि दद्यात् गौरवपदम् । श्रुत्वैतद्वचनं श्रेष्ठिनो जगाद देवी चंद्रलेखा । श्रेष्ठिन् ! तव पुत्री ममापि पुत्रीकल्पैवातो भयं मा कृथा मनागपि । इति उक्त्वा दत्वा च सन्मानं तया विसर्जितः श्रेष्ठी प्राप्तः स्वगृहम् । आरभ्य च तद्दिनात्तयोरेकचित्तयोर्दिनानि सुखेन गच्छन्तिस्म ।

अथान्यदा सा चन्द्रलेखा शून्यमानसा सती तिष्ठतिस्म । तादृशीं तां विलोक्य सुन्दरी प्राह—भद्रे ! अद्य का चिन्ता तव मानसे ? किं स्वदयितेन स्नेहच्छलेन अपमानं दर्शितम् । अथवा केनापि स्नेहिजनेन तवाज्ञा खण्डिता ? इति तदुक्तं श्रुत्वा चन्द्रलेखा प्राह—हे भगिनि ! नैतन्मे दुःखकारणं, किन्तु मम सप्तसु पुत्रेषु सत्स्वपि एकापि पुत्री नास्ति एतदेव हि

मे दुःखकारणम् । ततो यदि एकापि मम कन्या पुण्ययोगेन स्यात् तद्दिनादेव मे विषयसुखसेवनेन पर्याप्तम् । तस्मात् हे सुतन्वि ! तं किमपि प्रयोगं ओषधिं मंत्रं वा देहि, येन तव प्रसादेन एकापि मम पुत्री स्यात् । इति श्रुत्वा सुन्दर्या प्रजल्पितम् । ननु मम जनन्यापि पुत्रार्थे अनेके देवा अनेकश आराधिताः । विहितानि तिलकानि तीर्थस्नानौपधपानादीनि च । तथापि मनोनयनानन्दनो नन्दनो न जातः । तस्माद् हे चन्द्रलेखे ! विपुलर्द्धिविस्तराः पुत्राश्च भवन्ति पात्रदानात् प्राणिनाम् । व्याधिरहितं शरीरं तु अभयदानेन प्राप्यते । नवरं कुलदेव्याराधनमपि कुरु विधिना । मन्ये यथा अद्यैव रजन्यां पुत्रीदानं तन्निदानं वा कथयिष्यति सा । इति श्रुत्वा चन्द्रलेखयोक्तं हे भगिनि ! एतत् कार्यं तु तव सत्कमेव । कुलदेवता तु या त्वदीया सैव मदीयापि भवतु अद्यप्रभृति । ततश्च सुन्दर्या श्रेष्ठिगृहे गत्वा उपवासत्रयं कृत्वा श्रीमुनिसुव्रततीर्थाधिष्ठायिका नरदत्ता देवी स्मृता । तत्तपसा सा देवी प्रत्यक्षीभूयोवाच हे भद्रे ! " तव भगिन्याः पुत्री भविष्यति तत्सत्यापने सा एतं स्वप्नकं प्राप्स्यति," तस्यैतत् कथयित्वा किंचिद्वस्तुविशेषं च दत्त्वा सा देवी तिरोदधे । तदनन्तरं च प्रभाते सुन्दरी चन्द्रलेखागृहं जगाम । देव्या दत्तं शेषं तस्या हस्ते दत्त्वा कथितम् । हे भगिनि ! तव खलु भविष्यति पुत्री । दृष्टोऽपि त्वया स्वप्न एषः निशाप्रान्ते । " सुखप्रसुप्तायास्ते कण्ठे कनकमय्या समल्या स्वचंचुपुटेन पुष्पमाला क्षिप्ता " इति श्रुत्वा चन्द्रलेखा प्राह—हे भद्रे ! सत्यमेवेदं परं त्वया कथमज्ञायि । ततः सुन्दर्यापि रजन्यनुभूतः सर्वोऽपि वृत्तान्तः कथितः । उक्तं च-हे देवि ! अहं जानामि, यथा एतस्य स्वप्नस्य फलं तव पञ्चदशदिनमध्ये भविष्यति, सुखसुप्ता ये मनुष्या रात्रीप्रथमप्रहरे स्वप्नान् पश्यन्ति, ते ह्येकेनैव वर्षेण शुभाशुभं फलं प्राप्नुवन्ति, द्वितीयप्रहरे दृष्टस्याष्टमासप्रान्ते, तृतीये दृष्टस्य षण्मा-

साभ्यन्तरे, चतुर्थयामे दृष्टस्य तु पक्षमध्ये प्राप्यते फलम् । यः स्वप्ने आत्मानं स्नातं लिप्तमलंकृतं हसन्तं गायन्तं च पश्यति सोऽनर्थसंघातं प्राप्नोति। यः पुनः अशुचिविलिप्तां विलीनगात्रां स्वकीयां त्वचं पश्यति, स दैवयोगेनाचिन्तितमभ्युदयं प्राप्नोति। यश्च स्वं हयहस्तिरथवृषभसंगतं पश्येत्, अथवा प्रधानविहगं कनकमयं वस्तु वा किंचित् पश्यति तस्य प्रभूतर्द्धिर्भवति, यः पद्मसागरगतो हृष्टमानसश्च सन् नलिनीपत्रेषु पायसं भुङ्क्ते, स दासकुले समुत्पन्नोऽपि पृथ्व्या राज्यं प्राप्नोति, यदि कथमपि कश्चिद्देवभवने धवलगृहे क्षीरपादपे वा आरोहति, तत् क्षणं जागर्ति च, स ऋद्धिं सत्कारं सन्मानं च प्राप्नोति । यः पुनः सरोद्रहमपारसागरं च लीलयाभुजाभ्यां तरति स नरसुरसुखानि भुक्त्वा क्रमेण सिद्धिसुखं प्राप्नोति । यो वेतालभूतडाकिनीभिः सिंहादीनां श्वापदानां शृङ्गिणां च सुतीक्ष्णशृङ्गैः शस्त्रपाणीनां शस्त्रैश्च भयं लभते, स पुनर्महाकष्टं प्राप्नोति । येषां कण्ठे सुरभिश्वेतकुसुममालां कश्चित् प्रक्षिपति, तेषां ऋद्धिः पुत्राश्च भवन्ति। यत् श्वेतसुरभिकुसुममाला तया समल्या तव कण्ठे क्षिप्ता, तेन सा त्वत्पुत्री निर्मलशीलगुणयुक्ता तव सुखकरी च भविष्यति। इति श्रुत्वा तुष्टमानसा सती कतिपयदिनानि सा देवी यावद्गमयति तावद् धर्मकर्मयोगेन तस्या गर्भः समुद्भूतः । ततश्च संतुष्टचित्ता सा यावत् तं गर्भं सुखेन वहति तावत् शुभसूचकाः दोहदास्तस्याः संजाताः, तत्पूर्त्यै रथ्याचतुष्कचत्वरत्रिकेषु दुःखिभ्यो दानं ददाति, कारयति चाष्टाह्निकोत्सवान् जिनचैत्येषु। परमभक्त्याऽनवरतं कालोचितानि प्राशुकानि भक्तपानौषधादीनि साधुभ्यो ददाति । संपूर्णमनोरथा हृष्टहृदया सती तां बभाण इत्थम् । हे सुन्दरि ! जगत्त्रयेऽपि तव सत्को धर्मः सुखदोऽस्ति । प्रणिजगाद तदा च सुन्दरी चन्द्रलेखां, हे देवि ! स एव धर्मः शिवसौख्यमूलं यो जिनवरैः प्रज्ञप्तः, शेषं मोहविजृम्भितमेवेति । उत्पादस्थितिविनाशो, जीवानां

विविधा कर्मस्थितिः तथा पुद्गलपरिणामः, जिनधर्मादेव ज्ञायते । तथा जीवानां करुणापि जिनधर्मप्रभावादेव ज्ञायते क्रियते च । इति श्रुत्वा देव्या भणितं, यथार्थमेवेदम् । इत्यमुना प्रकारेण यावद्व्यतीता नव मासास्तावच्छुभे मुहूर्ते गुरुवासरे विंशतितमे पूर्वाषाढानक्षत्रे सुखदेषु सिद्धियोगेषु उच्चस्थानस्थितेषु बृहस्पतिप्रमुखेषु ग्रहेषु सकलजनजनितहर्षा जननीजनकप्रमुखानां स्वजनानां प्रीतिकरा संपूर्णाङ्गोपाङ्गा प्रसूता शुभलक्षणा दुहिता देव्या चन्द्रलेखया । तदा च कमलाधात्र्या त्वरितं गत्वा राजा वर्धापितः । राज्ञापि तस्यै स्वांगलग्नाः सर्वे अलंकारा दत्ताः । राज्ञानुज्ञप्तं जातं च वर्धापनं तदा सकलेऽपि श्रीपुरे नगरे मुक्ता गुप्तिवासिनः । कृता च वृद्धिर्मानोन्मानयोः । कनकमयस्तम्भसंस्थितमणिमयपांचालिकाप्रपञ्चेन मणिरत्नतोरणमयूखमालाभिश्च प्रकाशितं, मञ्चातिमञ्चरचनाकलितं, चन्दनमालासहस्रसंकीर्णं, सुरभिघनघुसृणजलप्रसरसिक्तनिःशेषभूमितलं, सुविरचितहट्टशोभं, चन्दनघटसुकृतचारुशोभायुतं, स्थाने स्थाने आरब्धानेकवरनाटकयुक्तं दंदह्यमानागुरुगुरुमघमघायमानघनधूमधूसरदिगन्तं, अम्लानमाल्यदामं, अनेकतालाचरानुगतं, नगरं जातम् । तत्र सुविरचितस्फारशृङ्गाररसारसंभाराभिः सधववधूभिः करतलस्थिताक्षतपात्राभिर्वर्धाप्यते स राजा । स च अमारीमुदघोषयति स । दुःखिभ्यो च दानं ददाति स्म । सत्कारयति स्म च स्वजनम् । सन्मानयति स नगरलोकम् । वाद्यमानानेकतूर्यमङ्गलशब्देन नृत्यमाननर्तकीसार्थेन, एवंविधेनोत्सवरचनाविशेषेण राज्ञा दशदिवसं यावत् वर्धापनकं कृतम् । तथा च सा सुमतिः सुन्दर्यपि देव्या सम्मान्य भणिता । हे भगिनि ! एषा बाला तव प्रसादेन वर्धताम् सुखेन । गते चैकस्मिन् मासे सुमुहूर्ते सुन्दर्या पितृभ्यां च तस्या बालायाः "सुदर्शना" इति नाम विहितम् । दिवसे दिवसे च लावण्यकान्तिपूर्यमाणगात्रैर्नवनवकलाविलासैः सितपक्षे चन्द्रलेखेव, सा

वृद्धिमाससाद । यथा इन्दुलेखया रजनी, कमलिन्या यथा सरसी, तथा उत्सङ्गतया बालया सा देवी अधिकं शुशुभे । कुमुदानां शशिलेखा, कमलानां दिनकरप्रभा, शिखिकुलानां च मेघावली उल्लासं यथा जनयति तथा सापि सुदर्शना बन्धुजनानाम् । इत्थं सुखेन वर्धमानायाः तस्या यावत् किंचिदधिकानि पञ्चवर्षाणि संजातानि, तावत् शुभदिवसे पुत्र्याः पठनार्थं उपाध्याय आहूतो । भणितश्च । हे विद्वन् ! एषाऽस्मत्पुत्री प्राणेभ्योऽपि वल्लभाऽतः सम्यक्प्रकारेण लिपिगणितप्रमुखा अखिला अपि कला अस्या अध्यापनीयाः । तेनापि ओमिति भणितम् । वाद्यमाने मधुरगम्भीरतूर्यगणे, गीयमाने मधुरगीते, नर्त्यमाने वरविलासिनीवृन्दे, दीयमाने महादाने, मागधगणोद्घोष्यमाणे जयशब्दे कृतकौतुकमङ्गला मङ्गलरवभृतभुवनतला शिविकारूढा सखीवृन्दसहिता महत्या विभूत्या सुदर्शना उपाध्यायशालायां प्राप्ता ।

इति बुधकमलदिनकरप्रभाकल्पायां सुदर्शनाकथायां जन्मप्रबन्धसंबन्धो नाम द्वितीयः प्रस्तावः ॥

## "अथ तृतीयः प्रस्तावः"

अथान्यदा सामन्तमन्त्रिभटचरटपरिवृतस्सन् सभायां स्थितो विजयाप्रातिहार्या विज्ञप्त इत्थं चन्द्रगुप्तनृपः, हे देव ! वेलाकूलरत्नाचलात् प्रहृष्टवदनो भयदर्शनातुरः कश्चित्पुरुषो वारितस्सन् द्वारे तिष्ठति । ततो राज्ञा भणितम् । एषः कश्चित्प्रवरयानपात्राद्यागमनं सूचयिष्यति । अतोऽयं तुष्टिदानयोग्यः सुखेनागच्छतु । तया विसृष्टः स आगत्य नमस्कृत्य च विज्ञपयामास । हे प्रभो ! त्वन्नियोगेन सदा रत्नगिरौ निवसामि । तत्र स्थितोहं बहुपोतविलोकनेनापि नाप्नोमि किंचिदाश्चर्यम् । अथ पुनर्महत् प्रमाणं अदृष्टपूर्वं दूरादायात् किमपि यानपात्रं दृष्ट्वाऽतुच्छाश्चर्यं प्राप्तोऽस्मि । तं च एरिसं-"धवलधयछत्तचामर-

चउपासलसंतवाउवट्टेहिं । तुंगट्टालोमालियधएहि जं सुरविमाणं व ॥ १ ॥ चउपक्खसु नरेसर पक्खरियं पक्खराहिं निवडाहिं । ठाणे ठाणे दढसत्तभडसमूहेहिं दुगिज्झं ॥ २ ॥ तिन्नियकूवा खंभा सत्त सिढा लोहनंगरा तीसं कूवा खंभोवरि पंजराइं सुहडाण जूज्झत्थं ॥ ३ ॥ चउदिसि ओलंबियखग्गकुंतकोदंडतूणजुयलेहिं । विसमीकयं समंता विसमपरिभमिरजंतेहिं ॥ ४ ॥ पन्नासा वीस तहिं वीसं हट्टाहिं पणिय पुन्नाहिं । कट्ठाहराइं पंचास तत्थ गुरुमंदिरं एगं ॥ ५ ॥ चत्तारि वाडियाओ, दस दस पेच्छाहराइं दोपासे धयतिल्लसस्सवर्त्थिधणाण संखावि नहु तत्थ ॥ ६ ॥ इय एरिसं च तं जाव पवहणं सव्ववेमि नरनाह ! । अप्फालिअजयतूरं संपत्ता मंदिरे ताव ॥ ७ ॥ निज्झामयस्स वयणेण देव तं पवहणं पडिक्खलियं । खंचेवि सिढा मुक्का चउदिसि नंगरा झत्ति ॥ ८ ॥ जो तत्थ धणेसो देव निज्जामयस्स परियरिओ । सं उत्तरिओ रयणायरतडंमि कयमंगलाचारो ॥ ९ ॥ सो तुह्म दंसणत्थं धणवइ जा एइ पाहुडविहत्थो तो पढमं देव ! मए तुमंसि वद्धाविओ एवं ॥ १० ॥ ”

चरवचनेन सानन्दः सन् राजा यावत् किंचित् उल्लपति तावत् विजयाप्रातिहार्या पुनरुक्तं, हे देव ! तव द्वारे ऋषभदत्तनामा सार्थपतिः तव पादपद्मदर्शनसमुत्सुकः तिष्ठति । अथ भणति नरेन्द्रः—हे भद्रे ! लघु प्रवेशय अत्र तं श्रेष्ठिनम् । इति श्रुत्वा तयापि स प्रवेशितः । अपि च—

सो सोहइ उसभदत्तो पाहुडहत्थो पसन्नवरमुत्ति । कस्सवि चरेण सिट्ठो निवस्स जिणधम्मदूओव ।
पारसियतेजिगज्झणियसंभवे ढोइऊण वरतुरए । दिन्नासणोवइट्ठो कयप्पणामो नरिंदस्स ॥

राज्ञा च तस्मै गुरुगौरवेण ताम्बूलं दापयित्वा पृष्टम् । हे श्रेष्ठिन् ! स्वागतं तव सपरिवारस्य ? । सार्थवाहः प्राह ।

हे नरनाथ ! कुशलमेव तव दर्शनेन तु विशेषेण कुशलं। सप्रणयं पुनरपि राज्ञा भणितं हे भद्र ! कुतस्तव स्वागमनम् ? कुत्र वास्तव्यो भवान् ? यदि अस्ति किंचित् अरहस्यं तर्हि कथय अस्ति महदाश्चर्यं मम। अथ च प्राह ऋषभदत्तः । हे देव ! उत्तरदिशायां अतिरम्यं अस्ति स्वस्ति संनिवेशः लाटनामा देशः । तत्र च भृगुकच्छपुरं नाम नगरम् यत्र चतुर्दिक्षु स्फाटिकशिलाभिर्विनिर्मितः कपिशीर्षजयंताट्टालकैश्चरणैर्दुर्लंघ्यः प्राकारोऽस्ति ।

निर्मलजलौघपूरिता अत एव दुर्लंघ्या खातिकाऽत्र कलिकलुषप्रतिस्खलने निवेशिता धर्मरेखा इव शोभते स्म । मुनिसुव्रतस्वामिजिनपादप्रतिबिंबेन यत् पवित्रं जगति । ततो भृगुकच्छनगरादागतोऽहं तव पादपद्मेषु इति श्रुत्वा राज्ञा कनककचोलकात् श्रेष्ठिनं ताम्बूलं दापयित्वा भणितम् । हे श्रेष्ठिन् ! इमे तुरगाः कुत आनीताः सन्ति । श्रेष्ठिना प्रतिभणितं हे महीनाथ ! 'पारसमणि–गजणी–तेजीयाः' उत्तरदिग्भवा इमे तुरगाः सन्ति। यस्य कस्यापि द्वारदेशे बध्यन्ते, तस्य भाग्यवतः शत्रुश्रीः स्वाधीना भवति । यतश्चेत्थमतो हे नृपते ! शृणु तावत् तुरङ्गानां लक्षणानि ।

"मुहमंडलंमि तुरया निम्मंसा दिस्समाणनसजाला । उरसि विसाला मज्झंमि परिमिया पिहुलभालयला ॥ १ ॥ लहुकंना कंनंतरसंकिन्ना पिहुतराय पिट्ठीए । पीणा पच्छिमपासे दुवलया पासुलिदेसे ॥ २ ॥ रोमोग्गमंमि निद्धा बंधुरखंधा सुजायघण केसा । सुपमाणवालिहाणा वट्टखुरा पवणसमवेगा ॥ ३ ॥ रत्तच्छिणो सुदप्पा सिरोरसुपसत्थदाहिणावत्ता । परिभवपयं रिऊणं जुज्झंमि जयंकरा पहुणो ॥ ४ ॥ आसणकक्खावत्ता जेपुण तुरगा कलाइया हीणा । किन्हुट्ठतालुदेसे सिरसिंगा च्छायदुक्खूराय ॥ ५ ॥ जेविय वामावत्ता वियडे तह हुंति पुच्छमूले वा । ते तुरगा नियपहुमहिलियाण दरिसंति

सियवत्थं ॥ ६ ॥

इत्थं च श्रेष्ठिनोपवर्ण्यमानानि तुरगलक्षणानि श्रुत्वा हर्षप्रकर्षपूर्णहृदयास्तिष्ठति यावन्मेदिनीशस्तावदाजगाम तत्र सुदर्शना पितुः पादपद्मनमनार्थम् । विद्याधरीवात्यन्तकान्तिप्राग्भारनाशितान्धकारा दूरादापतन्ती दृष्टा सानन्दलोचनेन नरपतिना । चिरकालसमुत्पन्नपितृदर्शनोत्कण्ठावती पादारविन्दप्रणतिपरा सा । स्थापिता च निजोत्सङ्गे । सा च, कीदृशी ? बहुमानस्याऽनुशीलनेन, विनयस्य प्रतिपन्नतया, हृदयस्य भावितया, गौरवस्य अनुष्ठितया, प्रादुर्भूता वत्सलभावस्य मूर्तिरिव । दृष्ट्वा च तां जातश्चेतसि सर्वेषां स्नेहावेशः । यथा चैषा पुण्यवती दृष्टमात्रापि हृदयमाह्लादयति । शीतलयति नयनपुटौ । निर्वापयति गात्रम् । क्षिपति चामृतकुण्डे सर्वानिति । तस्यां स्वभावविनीतायामपि अखर्वगर्वसंभावनां वितन्वानो नृपतिः प्राह, हे पुत्री ! मा कुरु विद्यागर्वम् । नहि अद्यापि त्वया संपादिता तुष्टिर्मे । इति श्रुत्वा "उक्तं च तया" तात ! प्रत्यक्षं धर्मविनयविघ्नकरम् ज्ञात्वा । करोति क इह श्रुतशीलविनाशन मानम् ॥ १ ॥ ज्ञात्वा कवित्वपटुतां वक्तृत्वं दक्षतां च जगतीशः । हृष्टो वदति गुणाढ्ये ! प्रश्नमिमं कथय कीदृक्षम् ? ॥ २ ॥ तद्यथा—कः क्रमते गगनतलम् ? किं क्षीणं वृद्धिमेति च नितान्तम् ? । को वा देहमतीव स्त्रीपुंसां रागिणां दहति ? ॥ ३ ॥ व्यस्तसमस्तं च ततः " ज्ञात्वा कथितं च तया, " गगने वियाति तात विख्यातः । अहरेति वृद्धिमनिशं प्रियरहितं दहति विरहश्च । अथ च—भणियं सुदरिसणाए । ताय इमं मज्झसंतियं एगम् । पण्होत्तरं वियाणह ! निरूवियं रूवसिद्धीए ।

"बोध्यं देववरं कथं ? बहुषु वै कः प्रत्ययः ? कर्म्मणां, संबोध्यस्तु कथं सदा सुररिपुः ? किं श्लाध्यते भूभृताम् ? ।

किन्त्वन्यायपरतामहो क्षितिभृतां लोके सदा निन्द्यते, व्यस्तन्यस्तसमस्तकंचन ततः शीघ्रं विदित्वोच्यताम् ।" अन्यच्च—

"कः खे भाति हतो निशाचरपतिः केनाम्बुधौ मज्जति, कः कीदृक् तरुणीविलासगमनं किं कुर्वते सज्जनाः । किं पत्रं नृपतेः किमर्जुनधनुः को रामरामापहृत्, मत्प्रश्नोत्तरमध्यमाक्षरपदैर्भूयात्तवाशीर्वचः ।" इति श्रुत्वा राजा प्राह—हे पुत्रि ! विद्वद्भिरपि दुर्भेद्यं विषमं इदं प्रश्नोत्तरं त्वमेव वक्तुं शक्ता । अतो हे वत्से ! कथय शीघ्रम् । अस्ति मे महत्कौतुकम् । इति श्रुत्वा सुदर्शना स्माह । हे तात ! " अयशः " इति प्रथमपद्यार्थः । " हे मेनाथ चिरंजीव " इति द्वितीयपद्ये आशीर्वचः । तां बुद्धिमतीं दृष्ट्वा, दध्यौ राजेति मानसे सुचिरम् । कः स्यादनङ्गमूर्तिः, प्राज्ञः शूरश्च भर्त्ताऽस्याः ? । श्रेष्ठी ऋषभदत्तोऽपि तस्या रूपातिशयं विद्यातिशयं च दृष्ट्वा चिन्तयति स्म । अहो ! इयं किमु प्रत्यक्षा सरस्वती लक्ष्मीर्वा ? अत्रान्तरे यज्जातं तन्निगद्यते । त्रिकटुत्रिफलाद्यनेकौषधविहस्तहस्तः शास्त्रार्थसार्थकुशलः समाजगाम कश्चिद्वैद्यस्तत्र संसदि । निषसाद च ऋषभदत्ताभ्यर्णे । तदाचाऽऽसनौषधोत्थतीव्रगन्धेन कथं कथमपि स्खलयतः निस्सृता छिक्का सार्थपतेः । "हा छी" इति भणित्वा तेनार्हच्छासनवासितमानसेन उल्लपितं चतुर्दशपूर्वरहस्यभूतमहामंगलाद्यपदं "नमो अरिहंताणं" इति तच्छ्रवणेन आश्चर्यरसरत्नाकरनिमग्नेव सती संभ्रान्तमानसेव चिंतयामास चेतसि राजपुत्री तथाहि–ननु अयं अरिहंतशब्दः कदापि कुत्रापि श्रुतो मया पूर्वम् ? । इतीहापोहं वितन्वती यावत् मनस ऐकाग्र्यं प्राप्ता, जातं तदैव जातिस्मरणम् तस्याः । तावत्तिर्यग्योनिबाणप्रहारगुरुवेदनाभवं दुःखं स्मृत्वा कम्पितशरीरा पपात सहसा धरणीतले । तां तादृगवस्थां दृष्ट्वा मूर्छितो राजापि तत्क्षणं । आक्रन्दति जननी परिजनश्च तद्दुखदुःखितः । तदा चादृष्टपूर्वां राज्ञः सुदर्शनायाश्चावलोक्य दुःस्थितावस्थां समुच्छलितः तत्क्षणं हाहा-

रवविरसः कलकलशब्दः । प्रवृत्तश्च आक्रन्दरौद्रः प्रलापः । ततः क्षुभितः समस्तोऽपि नगरजनः । तत्कालोत्पन्नगुरुभयभीतः तरलाक्षः शून्यमानसः शून्यवदनश्च जातः समस्तोऽपि पौरजनपदवर्गः । नानाविकल्पसंकल्पकम्पमानकरचरणा नगरवणिजो मंत्रयन्ति स्वकीयचेतोवृत्त्यनुकूलतामालब्याऽनेकान् विषयान् । तदाच—तत्पुरं कीदृशं जातम् ? तदाह—

नेसत्थियप्पसारा सहसा सव्वेवि संवरिज्जंति । दोसियहट्टाणंतो । सिचयचया लहु चइज्जंति ॥ १ ॥ सोवन्नियपुत्तेहिं पुत्ताविज्जंति सुन्नरुप्पाई । खडकिज्जंति खणेणं कंसारिय कंसउकरडा ॥ २ ॥ पसरंति तक्करनरा तह तालिज्जंति हट्टसंघाया । धावंति गंठिछोडा पुट्टलिया लहु पलायंति ॥ भयसंभमभरभिमल—उट्टंतपडंतजंतभज्जंता । जरजुन्नबुड्ढवणिया संवाहिज्जंति तरुणेहिं ॥

अन्यच्च—आस्थानसमीपे कलकलारावं श्रुत्वा भृत्यैः समर्यन्ते शस्त्राणि । गर्जंति कुञ्जरघटाः । परिष्क्रियन्ते तुरगाः । सज्जयंते रथवराः । संनह्यन्ति सुभटाः । गीयंते मागधैः पूर्वविनिर्जितप्रतिपक्षपक्षा महादक्षा महावीराः । वाद्यन्ते विजयढकाः । आस्फाल्यन्ते समरतूर्याणि । पूर्यन्ते भांकाररवपूरितभुवनतला भेर्य्यः । हक्कां कुर्वंतो वल्गंतः सुभटा उत्तिष्ठंति खड्गव्यग्रकराः । पलायंते खड्गखेटकभीताः कापुरुषाः । अत्रान्तरे विहितैर्विविधोपचारैर्लब्धचैतन्यो राजाऽऽरुरोह सिंहासनं स्वस्थमानसः । ततश्च प्राप्तचैतन्येन राज्ञा क्षुब्धान् जनान् ज्ञात्वा गुप्तिपालमुखेनाश्वासिताः सर्वे । तदा च नश्यन्ति धूर्त्ताः । निलुक्कंति तस्करा भयभीताः । बध्यन्ते ग्रंथीछोटकाः । हन्यन्ते कर्णत्रोटकाः गजतुरगरथपदातियोधसामन्तमन्त्रिभटनिवहाः सर्वेऽपि ज्ञातपरमार्थाः भेजुः स्वस्थतां क्षणेन । अथ च कर्पूरसुवासितहरिचन्दनकस्तूरिमिश्रपानीयसिक्ताङ्गा, शिशिरसमीरापा-

दितसौख्या, सुदर्शनापि क्षिपति दृष्टिं सुधावृष्टिमिव पार्श्ववर्तिषु । विलोकयति च ऋषभदत्ताभिमुखं पुनः पुनः यूथभ्रष्टा हरिणीव । दुःखितमपि जननीजनकं स्वजनवर्गं च न धीरयति वचनमात्रेणापि । अदृष्टपूर्वमपि ऋषभदत्तं संभावयति मधुरवचनैः। भोः भोः सुधर्मबान्धव ! जिनेन्द्रमतकुशल ! स्वागतं ते ? इहागतस्य भृगुकच्छपुरात् ? कुशलं तत्र निर्वृतिरतानाम् कन्दर्पगजेन्द्रहरिकिशोरकल्पानां परोपकारैकदत्तचित्तानां मुनिमतल्लिकानामिति ? । तदनन्तरं तद्वचनस्मरणसंजातकौतूहलः श्रेष्ठी स्माह भद्रे ! कदा भवत्या तत्रभवन्तः साधितस्वपरकार्याः कार्याकार्यविचारसारप्राग्भाराः साधवो दृष्टाः ? अथवा किमनेन प्रश्नेन ममापि ? । अह व न जुज्जं संसारसरणवसवत्तिआण जंतूणं । तं नत्थि जं न दढकम्मरज्जुबद्धाण संभवई ॥ १ ॥ तस्मात्संभावयामि यथाऽनया कदापि कुत्रापि अन्यस्मिन् जन्मनि दृष्टा सुसाधवः कृतं तद्वचोऽनुशीलनम् । स्मृतं च तदधुना जातिस्मरणेनेति। इत्थं विमृश्य कमपि कालं हृदि वितत्य च संकल्पजालं प्राहर्षभदत्तः। भद्रे ! नूनं कुशलिनस्संति तत्र मुनिसत्तमाः। निर्वहते च सुखेन तेषां संयमयात्रा । पर्युपासयन्ति तान् तत्राखिला अपि पुण्यपात्राः ।

इत्युक्त्वा भणितं तेनर्षभदत्तेन यथा—"धन्नासि तुमं ! कयलक्खणासि आसन्नसिद्धिगमणासि ! । जं खलु कुदिट्ठिकुलसंभवावि सहसत्ति पडिबुद्धा ! ॥"

अथ चाऽदृष्टाश्रुतपूर्वावस्थादर्शनवाक्श्रवणसंजातकौतुकेन नृपतिना निजगदे स्नेहैकसारया गिरा । पुत्रि ! किमेतत् सर्वं विलसितं ? कदा दृष्टमनुभूतं श्रुतं वा त्वया ? । इति श्रुत्वा जगाद बाला । हे तात ! शृणु तावत् चेतश्चमत्कारकरं मत्संबन्धम् । भृगुकच्छतलवाहिन्या वाहिन्यास्तटे कोरण्टकनामोद्यानं । तन्मध्ये तुङ्गो विशालश्च वर्तते एको वटपादपः । निव-

सति तत्रैका शकुनी सुखपरा। तिर्यग्योनिसंभवं सुखमनुभवन्ती सा जाता गर्भभारभरालसा, कदापि सुषुवे च तया पुत्री। प्रसवसमयसमुद्भूतवेदना विवशमनाः सा यावत् चिन्तयति कंचिज्जीवनोपायं तावन्मुक्तप्रचण्डपवनः उच्छलितधूलिपटलः प्रसर्पन्मेघजालः प्राप्तः प्रावृट्कालः। आच्छादितं नभस्तलमलिकुलकज्जलकोमलतमालदलश्यामलैर्मेघैः कुपुरुषकुलमिवापयशोभिः। हरगलश्यामले गगनतले चमत्कुर्वन्ति चेतांसि चपलाः। गर्जन्ति मेघाः स्फोटयंत इव ब्रह्माण्डम्। वर्षंति च निरन्तरं गुरुधारासंभारनिर्भराः विरहिजनहृदयानलसंदीपनहुताशतैलतुल्यास्तोयधराः। इत्थं च सप्तरात्रिदिनानि वृष्ट्वा स्तब्धः कथं कथमपि। अत्रान्तरे शुष्कतनुलता सा शकुनिका प्रेक्षते दिक्चक्रं बुभुक्षाक्षामकुक्षिः। गता चोड्डीयामिषनिमित्तं श्वपचपाटके। बह्वस्थिचर्म्मवसारुधिरपूतिदुर्गन्धमांसगृद्धैर्गृध्रैरतिभीषणे, विकरालकरङ्कोपरिपतदनेकामिषाशिशकुनिसंकुले, तस्मिन् भ्रान्त्वा सुचिरं गृहीत्वा मांसखंडमुत्पतिता यावद्गगनतलं तावद्धता केनचिन्म्लेच्छेन। पतिता भूपीठे करुणं रवमाणा। तदा च सा—

चिंतइ हा विहिनिग्घिण! मए विणा तुज्झकिं न पज्जंतं?। दीणाए मह सरिसो तुह साहीणो न किं अन्नो?॥ किंवा मए कयाइवि तुज्झकओ कोवि अवराहो। एमेव निरवराहा जेण हयाहं तए पाव॥

अथ तन्मे तत्कालीनमपत्यं। असमुद्भूतपक्षं कथं जीविष्यति मद्विरहे? इत्थं विलपति यावद्बाणाविद्धा सा तावत्तत्र मूर्तिमान् शुभसंगम इव संप्राप्तं साधुयुगलम्। भुवनत्रितयेऽति अभयंकराभ्यां ताभ्यां करमुत्क्षिप्योक्तम्। हे भद्रे अभयमस्तु तेऽस्मभ्यः माभयं कुरु किन्तूभयभवदुःखावहं मोहं त्यक्त्वा, हित्वा च दावानलकल्पं क्रोधं, शृणु तावद् धर्मस्वरूपम्। भव सावधानमनाः। वञ्चितासि संसारे कुशास्त्रधूर्त्तैः। न खलु हिंस्रकर्माणि धर्मसाधनानि भवन्ति। सर्वभूतानुकम्पाप्रधानो हि

भगवान् विशुद्धो धर्मः । तद्विरुद्धानि रागमोहादीनि । तन्न युक्तं भवत्याः धर्मबुद्ध्याऽधर्मसेवनम् । यतः—सन्निहिताऽशेषापाये काये । चलत्सु विविधरोगेषु । त्वरागामिन्यां जरायां, मनःशरीरसंतापकारिषु राजाद्युपवद्रवेषु, यायावरे यौवने, सर्वव्यसनकारिणीषु सम्पत्सु, मनोदाहिनीषु वियोगेषु चित्तवैधुर्यकारिणि विप्रियसम्प्रयोगे, सततमागामुके मरणे, सर्वथाऽशुचिनिधाने वपुषि, किम्बहुना ? असंख्यदुःखलक्षपरिपूरिते जगति वर्तमानानामसुमतां कीदृशं नाम सुखम् ? ॥

तदा च—ठाऊणकत्रमूले, तेहिं मुनिपुंगवेहि इय भणियं । अरिहंतो तुह सरणं, जगुत्तमो मंगलं च तहा ॥ कम्मकलंकविमुक्का, अणंतसुहनाणदंसणसुरूवा । लोयग्गपइठाणा, तुह सरणमणंतया सिद्धा ॥ परिचत्तपंचविसया, पंचमहव्वयधरा महावीरा । पंचसमिया तिगुत्ता, सुसाहुणो हुंतु तुह सरणं ॥ पंचासवपरिमुक्को पंचिंदियविजयलद्धमाहप्पो । केवलिकहिओ धम्मो दुहहरणं होउ तुह सरणं ॥

इत्थं कृतचतुःशरणा भवगतसमस्तभयरहिता सती हे भद्रे ! स्मर रागद्वेषादिकलङ्कपङ्करहितानर्हत्पादानिति—

अन्यच—अरिहंतनमुक्कारं इक्कं चिय कुणह परमभत्तिए । इहलोए अत्तिहरं सुहजणयं नूण परलोए ॥ किंच—तियलोयसारं एयं चिय सरह पंचनवकारं । जम्मन्तरेवि दुक्खाण भायणं जेण नहु होज्जा ॥ चउविहकसायचत्ता, विसयविरत्ता ममत्तपरिचत्ता । संजमनियमुजुत्ता तह चयसु चउविहाहारं ॥

इत्यमुना प्रकारेण निपीय कर्णाञ्जलिभ्यां सकलमपि दिनं मुनिवचोऽमृतं निमग्ना शान्तरसकुण्डे । मनसा वचसा कायेन चाराध्य सदाराध्यमुनिवरवचनं आयुर्दलानि पूर्णीकृत्य जाताऽहं तात ! ते प्राणतोऽपि प्रिया पुत्री—

अतोहि—श्रुतिश्रुतमात्रेणापि जिनवचनेन यदि एतादृशी ऋद्धिर्मया लब्धा, तदा सर्ववचनाराधनेन किं किं नं प्राप्यते ? संप्रति पुनः श्रेष्ठिमुखं पठितं "नमो अरिहंताणं" इति श्रुत्वा विवेकतरुबीजकल्पं जातिस्मरणं मे समुत्पन्नम् ॥

इति बुधजनचिन्तामणिकल्पायां सुदर्शनाकथायां जातिस्मरणप्रतिनिबद्धस्तृतीय उद्देशः समाप्तः ॥

तां पूर्वभवस्मरणभावितात्मानं सुतां विज्ञाय चिन्तयामाम चेतसि विचारचतुरो राजा । ननु इदं निखिलमपि कथाकदम्बकं सत्यमसत्यं वा ? यद्वा क्व पुनस्ते मुनिवराः ? कुत्र वा स वटवृक्षः । क्व सा शकुनी ? कथं सम्भवति इदं सर्वं शकुनजातिच्युतजीवस्य मम पुत्रीत्वेन भवनम् ? इति वितर्कसंपर्कसंव्याप्तस्वान्तः क्षमाकान्तः प्राह सप्रणयं सुदर्शनाम् । पुत्रि ! किमिदं कुरुषेऽलीकं वैराग्याटोपम् । एषा ते जननी गुरुदुःखदुःखिता । कृतशोकश्च परिकरः सर्वः । निराधाराश्च ते इमा बालवयस्याः । कथं नाश्वासयसीमान् सर्वान् स्निग्धगिरा ? । एतानि तुङ्गवरमन्दिराणि । एषा पुना राज्यर्द्धिर्विपुला । किं नोपभुङ्क्षे निखिलस्वजनसंयुतार्जितपुण्यप्राग्भारलब्धमिदं राज्यसुखम् ? पुत्रि ! शृणु तावन्मे पथ्यं वचः—जातिकुलरूपवीर्यविद्याविज्ञानप्रभृतिगुणगणकलितापि आज्ञा प्रतीच्छके सति स्वजनवर्गे कथं न कुरुषे रतिम् । कस्तावदयं वैराग्यावसरः यौवनेऽपि ? ननु–विदग्धासि । सावधानासि, जानासि समयोचितम्, 'वीणायां वाद्यमानायां, वेदोद्गारो न शोभते ॥१॥ अथ च श्रुत्वेदं समस्तमपि राजवचनम् । निर्मथ्य च स्नेहसारं । विशुध्यल्लेश्याका उपशांतमोहोपलब्धतत्वा सा प्राह । पूज्यपादारविन्द ! नतानेकदुर्जयनरेन्द्र ! भक्तिभरनतजनताप्रदत्तसततसात ! हे तात ! श्रुतं मया सर्वं पूज्यप्रणिगदितं निर्धारितं च मनसि । परं नहि मे कूटवैराग्येण किमपि कारणं । जानामि अहं पदार्थरहस्यम् । यतो अस्थिराः असाराः परिणामदारुणाः

विषमविषसदृशाः खलु विषयाः ! किमु किंपाकफलतुल्यैः विषयसंगसुखैः ? किमु पुनः स्वजनैः, ये मरणसमये न साहाय्यकारिणो न सहगामिनो भवन्ति । किं ताभ्यां जातिकुलाभ्यामपि, ये विनश्वरे । नहि कापि सिद्धिस्तेन रूपेणापि यन्न यौवनेऽपि भूषणैः शोभते । किमसारेण बलेनापि यद्रोगैर्विनश्यति । नहि धनेनापि कार्यसिद्धिर्यदर्जने रक्षणे च महत्कष्टम् । धनार्थिनां नहि किमपि अकृत्यम् । वदन्ति अलीकमपि निर्भरम् । मुष्णन्ति परान् परमप्रयासेन । कुर्वन्ति मित्रद्रोहमपि । घ्नन्ति मातरमपि । व्यापादयन्ति पितरमपि । निपातयन्ति भ्रातरमपि । विनाशयन्ति भगिनीबन्धुवर्गमपि । मारयन्ति शासकमपि । कुर्वन्ति विश्वस्तवञ्चनमपि । किं बहूक्तेन तात ! नास्ति विश्वेऽपि तदकृत्यं यन्न कुर्वन्ति धनार्थिन इति बाह्यधनरहितोऽपि धर्मधनः पूज्यते पूज्यलोकेन । परिवार्यते बन्धुवर्गेण । श्लाघ्यते बन्दिवृन्देन । बहु मन्यते विद्वज्जनेन । अनुगम्यते धनिभिरपि । परमार्थबुद्ध्या विचार्यमाणा जननीजनकबान्धवा अपि दृढबन्धकल्पा एव । यच्च प्रेक्षणभूषणादिकं तदपि रंगभूमौ नटवेशसन्निभम् ।

अन्यच्च—सव्वं विलवियं गीयं । सव्वं नट्टं विडंबणा । सव्वे आभरणा भारा । सव्वे कामा दुहावहा ॥ १ ॥

अथास्मिन्नवसरे आजगाम ज्ञाननिधिर्नामा पुरोहित आस्थानमण्डपे तत्र । वितीर्याशीर्वचनं राज्ञे उपविष्टः राजप्रदत्तासने । पृष्टं हस्तस्पृष्टमस्तकेनेलापतिना । भोः पूज्य द्विजवर ! धर्मार्थिनां को धर्म श्रेष्ठः सुखदश्च । यतोऽस्मत्पुत्री धर्मार्थं अरिहन्तं स्मरन्ती संसारोद्विग्ना तिष्ठति । इति श्रुत्वा चिन्तितं द्विजन्मना । अत्यन्तमुग्धेयं सुललिता सौम्या सुदर्शना । ततोऽस्त्यस्याः प्रतिबोधनोपायः । इति संचिन्त्य युक्तितः समार्थितवान् सः । तथाहि—भो राजशेखर ! सत्यं धर्मशीला

इयं परं च करोति धर्ममात्मबुद्ध्या-केवलं मुग्धतया न जानाति तद्विशेषम् । शृणुत तावद्धर्मसर्वस्वं यदुक्तमारण्ये—

इज्या १ ध्ययन २ दानानि ३ तपः ४ सत्यं ५ क्षमा ६ दमः ७ अलोभ ८ इति मार्गोऽयं । धर्मो ह्यष्टविधः स्मृतः ॥ पुराणेषु तु आश्रमभेदात् धर्मश्चतुर्धा प्रोक्तः । आश्रमाश्च ब्रह्मचर्य १ गृहस्थ २ वानप्रस्थ ३ यति ( संन्यास ) ४ नामतश्चत्वारो भवन्ति । तथाहि-यावत्तु नोपनयनं क्रियते वै द्विजन्मना । कामचेष्टोक्तिभक्ष्यस्तु तावद्भवति पुत्रकः ॥ १ ॥ कृतोपनयनः सम्यग् ब्रह्मचारी गुरोर्गृहे । वसेत तत्र धर्मोऽयं कथ्यते तन्निबोध मे ॥ २ ॥ सत्यं शमस्तपः शौचं संतोषो ह्रीः क्षमार्जवम् । ज्ञानं दया दमो ध्यानमेष धर्मः सनातनः ॥ ३ ॥ ततश्च—गार्हस्थ्याश्रमकामस्तु गृहस्थाश्रममावसेत् । वनप्रस्थाश्रमं वापि चतुर्थं चेच्छयात्मनः ॥ ४ ॥

अह-माहणखत्तियवइससुद्दइयचाउवन्नभेयेणं । होइ गिहासमधम्मो चउप्पयारो इहं तत्थ ॥ १ ॥ छक्कम्मरया विप्पा पढंति पाढंति दिंति दाणाइं । गिण्हंति अप्पदाणं कुणंति जन्ने करावंति ॥ २ ॥ तह खत्तियाविनरवर ! हवंति अहिगारिणो तिकम्मेसु । दाणाइं दिंति विज्जं पढंति जन्नं करावंति ॥ ३ ॥ नायेण सयललोयं, सयावि पालंति हुंति धम्मपरा । रक्खंति अणायारं, करेण लोयं न पीडंति ॥ ४ ॥ जूअं मज्जं मंसं वेसा पारद्धि परधणपरित्थि । इह परलोयविरुद्धं चयंति निच्च ? खत्तिया दूरं ॥ ५ ॥ विज्जावाणिज्जकला निवसेवाइं पसत्थकम्माइं । वेसा कुणंति नरवर ! नयधम्मपरा य हुंति सया ॥६॥ बंभणखत्तिय वेसाण—वज्जियकरिसणंति वन्नस्स । एयं किलिठकम्मं पामरलोयच्चिय कुणंति ॥ ७ ॥

उक्तं च स्मृतिषु—संवत्सरेण यत्पापं कुरुते मत्स्यबन्धकः । अधोमुखेन काष्ठेन तदह्नैकेन लाङ्गली ॥

सुद्धावि देवगुरुभत्ति—तप्परा हुंति दिंति दाणाइं । एसो उ गिहत्थासमधम्मो कहिओ समासेण ॥

भूमिशय्याब्रह्मचर्यतपोभिश्चात्मकर्षणम् । वानप्रस्थस्य धर्मोऽयं यतिधर्मस्त्वसौ पुनः ॥ १ ॥ सर्वसङ्गपरित्यागो ब्रह्मचर्यमकोपिता । जितेन्द्रियत्वमावासो, नैकत्र वसतिश्चिरम् ॥ २ ॥ यतः, ग्रीष्महैमन्तिकान् मासानष्टौ भिक्षुः क्रमेत्पुनः । दयार्थं सर्वभूतानां वर्षास्वेकत्र चावसेत् ॥ ३ ॥ अनारम्भस्तथाहारो, भैक्ष्यान्नेनानकल्पता । आत्मज्ञानाववोधेच्छा तथाचात्मावलोकनम् ॥ ४ ॥ अयं हि खलु चतुराश्रमविषयः धर्मः शास्त्रसम्मतः कर्तुमुचितः, धन्यापुनरेषा ते पुत्री यया निर्वृत्तकामाभिलाषित्वेन यौवनेऽपि अयमाराधितुमारब्धः । अपि च—

दालिद्दियस्स दाणं, पहुणो खंति विउस्स नहु गव्वो । जुव्वणवंतस्स तवो, दया य धम्मस्स कसवट्टो । —

तथापि—शृणुत तावद्यदधुना कर्तव्यं कन्यकायाः, सर्वेषामेव धर्म्माणामादिधर्म्मो गृहाश्रमः । गृहमाश्रित्य यत्किञ्चित्, क्रियते धर्मसाधनम् ॥ १ ॥ यथा नदीवहाः सर्वे सागरं यांति संश्रिताः । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ २ ॥ इति श्रुत्वा प्रोवाच हर्षप्रकर्षपूर्णमानसो नृपः । पुत्रि ! कुरुष्वैनं धर्मं गृहवासस्थिता मा कुरु समयाऽनुचितं वैराग्यम् ।

किञ्च—मज्झत्थो नीरागी, घरवासविउ वि लहइ जं पुन्नं । नीसंगो विहु न तहा सरागभावो वणत्थो वि ॥

अन्यच्च—हे पुत्रि ! जातिकुलरूपविद्याविक्रमैर्यो युक्तो भविष्यति तेन समं कारयिष्यामि ते पाणिग्रहोत्सवम् । तस्मात्स-

कलत्रस्वजनजनमनोद्विग्नताहेतुकं निरर्थकमुद्वेगं मा कुरु । अन्यदपि यत्ते रोचते कथय तदपि करिष्यामि सर्वम् ।

इतोऽनन्तरं जगाद विदितसर्वविद्दर्शना, नृपपुत्री सुदर्शना तात ! ज्ञातं मया सर्वं पूज्यप्रसादीकृतं सुस्निग्धं कृपाकलापमधिगतं च तद्गतमाकूतजातं—अस्ति मेऽस्मिन् विषये किञ्चिद्वक्तव्यताविषयं तातपादैः समम्, आरम्भमन्तरेण गृहस्थस्य किमपि कार्यं न सिद्ध्यति । तदकरणे चाश्रमशून्यता, तत्सेवने तु धर्मध्वंसः "आरंभे नत्थि दया" इत्यागमश्रुतेः दयायाः अभावे धर्मोऽपि न स्थितिं लभते। अतो धर्मार्थिना आरंभे न प्रवर्तनीयम्। यतः भिक्षुकाः स्वामिनो ज्ञेया, गृहस्थाः किंकराः स्मृताः । गृहस्थाः सर्वतो निन्द्या, स्तुत्याः सर्वत्र भिक्षुकाः ॥ १ ॥ मेरुसर्षपयोर्यद्वद्भानुखद्योतयोरिव । समुद्रसरसोर्यद्वत्तद्भिक्षुगृहस्थयोः ॥ २ ॥ गृहस्थानां कुतो धर्मस्तातारम्भजुषां सदा । पोषणे परिवारस्य रतानां च विशेषतः ॥ ३ ॥ खण्डनी पेषणी चुल्ली जलकुंभः प्रमार्जनी । पंच शूना गृहस्थस्य तेन स्वर्गं न गच्छति ॥ ४ ॥

अपि च—हुज्जा जलणेवि जलं, विसहरदाढाइं होज्ज अमयं पि होज्जा ससस्ससिंगं, नहु धम्मो जीवहिंसाए ॥ ६ ॥

तथा च—हे तात ! अनादिकालसंबन्धसंबद्धान्विषयान् निरस्य, स्वीकृत्यचार्हतं शुद्धमार्गं केचन भव्याः—भद्रभव्यतयाऽतीत्यानन्तसंसारविस्तारं, संप्राप्य भूयोभूयः शुभसामग्रीं, लघुकर्मतया विजानन्ति हेयोपादेयविभागं, चिंतयन्ति च ते यथाऽतिदुर्लभमिदं मानुष्यमाकरो निखिलभावरत्नानां, कारणं निर्वाणसुखस्य, संप्राप्तमिदमस्माभिरधुना—समारूढा वयं महत्तरां कोटिम् । तन्न युक्तोऽधुनाऽस्माकं विषादपि विषमतरविपाकेषु विषयेषु प्रतिबन्धः । इति संचिन्त्य समासादयंति ते सर्वज्ञोपज्ञं धर्मं, अनुशीलयंति धार्मिकान् । ततो न विप्रलभ्यन्ते कुतीर्थकैः, न प्रवर्तन्ते कुधर्मग्रहणे । कुर्वन्ति साधुमार्गलक्षणं

वाणिज्यं, गृह्णन्ति क्षान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चनत्वब्रह्मचर्यसंतोषप्रशमादिकं प्रतिक्षणं गुणरत्ननिचयं, आवर्जयंति साधुसाधर्मिकजनम्। पूरयन्ति सद्गुणैरात्मानम्। ततश्च जायन्ते सद्यः स्वकार्यसम्पादकाः। हे तात! इदं हि खलु मनुष्यभवे सारं यद्देवगुरुधर्माज्ञाराधनम्। तत्रापि यश्च न बद्धः पुत्रकलत्राशादृढबन्धनैः, न च रतो मदनबाणैः, विमुक्तसर्वभयभैरवः। न धारयति हस्ते प्रहरणजातं,। पथि खिन्नोऽपि नारोहति वाहनम्। यश्च बुद्ध इव न मालाकरः। न च गृहीतयोगमुद्रः। न च पुस्तकविहस्तहस्तः। दुर्जयकाममृगेन्द्रकुम्भदलनसमर्थः, ज्ञातत्रिभुवनोदरवर्तिपदार्थसार्थपरमार्थः। क्रोधदावानलोल्लवने पुष्करावर्तमेघकल्पः, शोकभुजङ्गमोद्दलने गरुडसंकाशः, मोहतरुभञ्जनैकमतङ्गजः, गुरुमानमहीधरचूर्णैकवज्रदण्डः, य पुनस्त्यक्तसर्वसङ्गनिरुद्धेन्द्रियग्रामः आत्मैकरामः स एव देवाधिदेवो जिनेश्वरो देवः स्वं परं च तारयितुं समर्थः।

अन्यच्च—सर्वदयः सर्वगुरुः सर्वीयः सर्वसौख्यदाता च। सर्वनतपादपद्मः, सर्वज्ञः सर्वदर्शी च ॥ १॥ क्रोधो मानो भयं द्वेषो रागो मोहश्च चिन्तनम्। जरा रुजा च हासश्च, खेदः स्वेदो मदो रतिः ॥२॥ वञ्चनं जननं निद्रालोभश्चाष्टादशाप्यमी। दोषा यस्य न विद्यन्ते, परमात्मा स उच्यते ॥ ३ ॥ गुरवस्तु—त्यक्तगृहगृहिणीपुत्रपरिवाराः, समसुखदुःखाः अवगतजीवादिपरमार्थसार्थाः। दुर्धरपंचमहाव्रतगुरुभारोद्वहनधीरधुरीणधवलकल्पाः, शीलाङ्गाष्टादशसहस्रभारभरणप्रवणाः, दुःसहद्वाविंशतिपरीषहसहनोद्यताः। महासत्त्वाः, विध्यापितक्रोधानलाः निरुद्धमनोवाक्कायपथाः, स्वाध्यायध्यानावक्षिप्तचित्तवृत्तयः, विविधाभिग्रहपालनलालसाः। शमदमसंतोषपराः, समतृणमणिशत्रुमित्रगणाः, षड्जीवनिकायदयावन्तः, मधुकरवृत्तिप्रकल्पितवृत्तयः, स्नान्ति ते संयमपानीयपूर्णायां दयैकतरङ्गायां शीलकूलायां सत्यस्रोतसि आत्मनद्यां नित्यम्। येषां हि सत्य-

तपइन्द्रियनिग्रहकरुणारूपस्रोतश्चतुष्कमेव पापकर्दममपहरंति किमु तेषां सलिलमात्रेण ? उपशमविवेकसंवरपवित्रकुण्डान् विधाय, ध्यानज्वलनं प्रज्वाल्य, ज्ञानाज्येनाभिषिच्य । क्रोधमानमायालोभकामरागद्वेषादीनन्तरङ्गपशून् आहुतिविषयान् विधायं भक्षयंति क्षमापुरोडाशं । ब्रह्मचर्यमहाव्रतपवित्रशुभशान्तिजलेन क्षालयन्ति पापमलं तथा यथा पुनर्न संभवति, ददति दक्षिणामभयं सर्वजीवानाम् । हे तात ! एतादृश एव गुरवः स्वं परं च तारयन्ति । धर्मस्तु देवगुरुतोऽभिन्नविषयो भिन्नविषयश्च— तत्र भिन्नविषयस्तु एवं प्ररूपयंति कृतत्रिभुवनजनप्रसादाः । जिनेन्द्रपादाः--

तद्यथा--जीवेसु दया निच्चं सच्चं वयणं अदिन्नअग्गहणं तिगरणसुद्धं सीलं परिग्गहारंभपरिहारो ॥ खंतिगुत्ति मुत्ती इंदियविजओ कसायविजयो अ । समसत्तुमित्तभावो सिवसुहफलओ इमो धम्मो ॥

वीतरागो महादेवो, ब्रह्मचर्यं महाव्रतम् । किंबहुना । महादानं दया नित्यं, ब्रह्मचारी महागुरुः । तथा चानुगृह्णन्ति भूयो भूयो जीवलोकमुपदेशामृतच्छटया ।

तथाहि--भोभो ! महानुभावाः ! केयमविद्या ? कोऽयं मोहः ? केयमात्मवञ्चना केयमात्मवैरिकता ? येन यूयं गृध्यथ विषयेषु, मुह्यथ कलत्रेषु, लुभ्यथ धनेषु, स्निह्यथ स्वजनेषु, हृष्यथ यौवनेषु, तुष्यथ निजरूपेषु, पुष्यथ प्रियसंगमेषु, रुष्यथ हितोपदेशेषु, दुष्यथ गुणेषु। नश्यथ सन्मार्गात्सत्स्वप्यस्मादृशेषु सहायेषु। प्रीयध्वे सांसारिकसुखेषु न पुनर्यूयमभ्यस्यथ ज्ञानं, नानुशीलयथ दर्शनम्, नानुतिष्ठथ चारित्रम्, नाऽचरथ तपः, न कुरुथ संयमम् ; न संपादयथ सद्भूतगुणसम्भारभाजनमात्मानम् । एवं च तिष्ठतां भवतां भो भद्राः ! निरर्थकोऽयं मनुष्यभवः । निष्फलमस्मादृशां सन्निधानम् । निष्प्रयोजनोऽयं

भवतां परिज्ञानाभिमानोऽकिञ्चित्करोऽयं सर्वोऽपि प्रयासः ।

अतो मुञ्चत विषयप्रतिबन्धनम् । परिहरत स्वजनस्नेहादिकमम् । विरहयत धनभवनममत्वव्यसनम् । परित्यजत निःशेषं सांसारिकमलजाम्बालम् । गृह्णीत भागवतीं भावदीक्षाम् । विधत्त सम्यग्ज्ञानादिगुणगणसञ्चयम् । पूरयत तेनात्मानम् । भवत स्वार्थसाधकाः यावत् संनिहिता भवतां वयम् ।

अथ च—'यत्पुनर्नवयौवनकलितेन प्रवरवरेण समं ते पाणिग्रहं कारयिष्यामीति, समुपदिष्टं भवता तत्तु भवान्तरेऽपि अनुभूतमनेकदा संसारे, नहि तृप्यति वह्निः काष्ठैः । भुक्तं मया संसारसुखं भवान्तरेषु दृष्टो दयितस्नेहपरिणामः । हे तात ! अलमनेन विडम्बनामात्रसौख्येनेति । गन्तव्यं मयकाऽवश्यं भृगुकच्छे प्रणम्या मुनिमतल्लिका । कारयितव्यं जिनायतनम् । पर्याप्तं संसारविलासेन । इत्थं च शास्त्रार्थविचारचतुरां स्वपुत्रीं विज्ञाय भणिता भूपतिना सप्रणयं सुंदरी भद्रे ! त्वं तावत् स्वभावतो हि स्वकार्यकरणोद्यताऽसि, अतः शृणु मे एकं वचनं एषा हि कुवलयाक्षी पुत्री तव प्रसादेनैवास्माभिर्लब्धा । अधुनापि त्वमेव तथेमां प्रेरय यथाऽसौ विषयसौख्याऽनुकूलतां भजेत् । एषा हि खलु तव भगिनीभावमुपगता प्राणेभ्योऽपि प्रिया, करिष्यति नूनं दुष्करमपि लघु तव वचनेन ।

अथान्यदा—शास्त्रार्थनीतिविस्तरसमर्थां, सर्वथा संत्यक्तविषयाभिलाषां, स्वबालां निरीक्ष्य, प्राह सहासं स प्रणयं च सुन्दरीं भूभर्ता । हे महानुभावे ! यद्यपि त्वं स्वकार्यसाधनैकसावधानासि, नाकाङ्क्षसि सांसारिकस्नेहजालम्, तथापि शृण्वेकं मे वचनम् । तव प्रसादादेवैषा मम पुत्री संजाता । अतोऽहं कल्पयामि यथा तव वचनेन दुष्करमपि कार्यं स्वीकरिष्यति, ततो

हे कुवलयाक्षि ! यथेयं बुध्यते, रज्यते च विषयसुखेषु, तथा विधेहि निधेहि चैनां संसारवासवशवर्तिनीम् । "स्वजना हि व्यसनकाले समदुःखिनो भवन्ति" श्रुत्वैतद्वचनं महाराजस्य मनसि चिन्तयामास सुन्दरी, "किमत्र मे कर्तव्यम् ? किं वक्तव्यम् ?" एषा सुदर्शना जातिस्मरणोपलब्धपूर्वभववृत्ता ज्ञातसर्वज्ञशासनरहस्या किमु करिष्यति मद्वचनम् ? ।

अन्यदपि—विसयकहा गाढयरं विसयविरत्ताण दूमए मणंमि । ता जिणधम्माणुगयं सुदरिसणं किंपि जंपेमि ॥

इति संचिंत्य सुचिरं प्राह सुंदरी । हे नरनाथ ! एतादृशेषु कार्येषु अस्माकं किमु वक्तव्यं भवति ? हे विचारचतुर्मुख ! विषयसुखलुब्धानां यानि दुःखानि भवन्ति तानि हि अन्ते विषमविषकन्दलीकल्पानि ज्ञेयानि । शृणु अत्र यदनुभूतं मया— अस्ति निजविभूतिविजितसुरसदनगर्वा, अयोध्या नाम महापुरी । तत्र च त्रिभुवनख्यातेक्ष्वाकुवंशनभोमणिकल्पः कल्पनातीतकल्पितार्थसार्थसाधनसमर्थः मुनिसुव्रततीर्थनाथचरणकृतशरणः मिथ्यात्वतिमिरसंभारहरणखरकिरणः सर्वत्र संप्राप्तसन्मानः रक्षितनिजधर्माभिमानः जयवर्म्मा नाम वसुन्धरानाथः ।

स च कीदृशः "कित्ति सुरलोयावहि, सत्तुखयावहि परक्कमो जस्स । भत्ति जिणनमणावहि दरिद्दखयावहि चाओ" ॥

तस्य च—वरसुरभिशीलरत्नेन शिशिरमधुरवचनेन जनितजनतामन्दानन्दा पद्मावती नाम महादेवी ।

सा चैकदा—पुत्राभावोद्भूतचिन्ताजालदूयमानमानसा सती पृष्ठैकया परिव्राजिकया । भद्रे ! किं नाम ते दुःखकारणम् ? कथिते च तया स्वकीयचिन्ताहेतौ प्रणिजगाद प्रव्राजिका । सुभ्रु ! त्यज स्वकीयं खेदोत्कर्षं, भज च परमं हर्षम् ! भविष्यति खलु ते पुत्ररत्नप्राप्तिः नात्रार्थे कार्यः कोऽपि संदेहः, धार्या च धृतिः स्वीकार्या च नितांतं धर्मेऽवधृतिः । इत्युक्त्वा औषधं च

दत्वा गता सा क्वापि । साधितश्च तदुपदिष्टः कल्पः तथापि न जातस्तस्याः कोऽपि पुत्रः । कालान्तरेणैका पुत्री संजाता । जातमात्रायां च तस्याम् सकलनिमित्तशास्त्रपारंगतेन सहस्रशः संवादितादेशतया परं संमतेन केनापि गणकगणाऽग्रणनीयेन स्फुटीकृत्य तात्कालिकग्रहाणां दशाफलमानन्दाश्रुजलपूरप्लुतेक्षणेन क्षितिपतेरग्रतः स्पष्टाक्षरमिदमादिष्टम् । जगदे च तत्कुलप्रत्यूहव्यूहापोहप्रवणया कुलदेव्याऽपि समागत्य स्वप्ने—

यथा—हे नरवर्मन् ! एषा ते पुत्री संप्राप्तेऽपि पौढे यौवने वर्जितसर्वविकारा तर्जितमारप्रचारा, सर्व जनवन्दनीया साध्वी भविष्यति । एषा कन्यका निकामं सत्पुण्यभाग्यभागिनी भाजनं भविष्यति भूयसामात्मसुखानाम् इत्येतदाकर्ण्य सर्वेपि नगरजनपदनिवासिनो जनाः परां मुदमवापुः । ततश्च धात्रीभिर्लाल्यमाना वर्ध्यमाना च पितृमनोरथैस्सह लावण्यरूपसौभाग्यगुणसमृद्धियुक्ता कृतशीलवतीनामा क्रमेण यौवनं प्राप । दृष्ट्वा च तस्या अद्भुतं रूपं चिन्तयंतिस्म राजा । जितरतिरूपायाः सुरूपायाः अस्याः कन्यकायाः योग्यो वरः कुत्रापि प्राप्स्यते नवा ? इति चिन्ताचान्तस्वांतः पृथिवीकान्तः प्रधानपुरुषैः सर्वत्र तद्योग्यं वरं गवेषयामास । आसादयामास चावसादं स्वाभिमतवरस्यालाभात् । यतः "जातेति चिंता महतीति शोकः, कस्य प्रदेयेति महान् विकल्पः । दत्ता सुखं स्थास्यति वा नवेति, कन्यापितृत्वं खलु नाम कष्टम्" ॥

इति चिन्तासन्तानव्याप्तहृदयः आस्ते यावद्राजा तावदाजगाम तत्सेवार्थं कुणालाधिपतेः "आहवमल्लस्य" सुतः विजयकुमारः । नभोमार्गादुत्तीर्णेन, दूरात्कृतप्रणामेन, सहसा संनिधौ संप्राप्तेन तेन विनीतेन नतचरणतलः क्षितिपतितिलकः परं तोषपोषमासदत् । तद्रूपाक्षिप्तचित्तः सर्वोऽपि नागरिकजन इतस्ततो धावतिस्म । अत्रान्तरे जयवर्म्मराजनतनया पितुः

पादनमनार्थं सखीवृन्दपरिवृता सदसि समवातरत् । निरीक्ष्य च जितमारं तं कुमारं ध्यायति स्म मानसे । अहो ! अलौकिकीयं रूपसंपदस्य भाग्यशालिनः । यस्याः कस्याः अपि अभङ्गुरभाग्यायाः भविष्यत्ययं दयितः सा एव भुवि धन्या पुण्यैरनन्या च । यद्यपि तया भावरहितया तत्र कुमारे दृष्टिर्दत्ता, तथापि पार्श्ववर्तिभिश्चिन्तितं यथा कांक्षतीयं कन्या एनं कुमारं भर्तारम् ।

तद्यथा—"रूवेण दिट्ठिपसरो, पसरेण रई रईइ संसग्गो । तेण खलु गलइ सीलं, पणठसीलाण संसारो ॥ १ ॥ रसणिंदिय वंभवयं, मणगुत्ती तहय मोहणियकम्मं चउरो इमाइं नूणं, जिप्पंति जइकरीरेण" ।

इत्थं च प्रसर्पति तत्र सदसि तस्मिन् कथाकलापे, त्रपासंभारभारभृतहृदया पितुः पादौ प्रणम्य निर्गत्य च संसदः समाजगाम निजावासम् । राजापि अजानन् तद्भावमस्मरन् देवतादिवचनं ददौ कन्या कुमाराय ।

तदा च—गणनागते शुभमुहूर्ते, विनिश्चिते लग्नदिवसे, संयोजितायां च विवाहाहार्यां समग्रसामग्र्यां धवलितेषु विमलीकृतेषु च सर्वेषु हर्म्येषु, केनचिदुद्यानपालकेनागत्य विज्ञप्तम् । देव ! गतोऽधुना शिशिरकालः । समायातः सुरभिपाटलागन्धाकृष्टमधुकरनिकरो मानिनीमानविद्रावणो वसन्तराजः । इति श्रुत्वा हर्षप्रकर्षपूर्णमानसो नृपतिर्वनपालायाजीविकार्हं पारितोषिकं वितीर्णवान् । प्राप्तश्च सकलान्तःपुरपरिवृतो विजयकुमारादिस्वजनजनपरिकल्पितानल्पशोभः पुष्पकरंडकोद्याने । जलक्रीडादिविविधविनोदेन क्रीडति यावद्धरणीधवस्तावत्कृतविजयकुमाररूपेण केनापि धूर्तेन हृता सा शीलवती । ह्रियमाणा च सा कुमारमेव मनसि ध्यायन्ती समुवाच हे भद्र ! प्रेक्षतेऽत्र सकलो मे जननीजनकादिः परिवारः । अतो मुञ्च मां लघु, न

युक्तः कर्त्तुमयं हास्यविलासः। स च धूर्तखेचरः सशङ्कः सन् कुमारविक्रमं जानन्नपि वैताढ्यमार्गं मुक्त्वा सागरसम्मुखं चचाल—एवं च संभ्रान्तचित्तः स प्राप यावत्सागरान्तःस्थविमलशैलशिखरम्, तावत्करालकरवालविहस्तहस्त आजगाम तत्र राजकुमारः। दष्टोष्ठभृकुटिभीषणमूर्तिधरः ऊर्ध्वकेशरक्ताक्षः तं कन्याचौरं निर्भर्त्सयति स्म। रे पुरुषाधम! दुराचार! परमहिलापहार! स्मृतोऽसि अद्य कृतान्तेन, भव सावधानः स्मरेष्टदेवतां, स्वीकुरु शस्त्राणि, सज्जीभव समयप्राप्तेऽस्मिन्नाहवे। अत्रान्तरे रूपेण समानौ, सदृश परिधानौ तुल्याभरणधारिणौ तौ दृष्ट्वा चिंतयामास चेतसि सा बाला। नन्वनयोर्मध्ये कः कुमारः? को वाऽसत्यरूपः? अहं मन्ये यथा पश्चादागतेन हि सत्येन भवितव्यम्। अस्ति यदि मे सतीव्रतं तदा सत्य एव जयतुतराम्।

अथ च स खेचराधमो विजयकुमारमारणाय मुञ्चति यावच्चक्रं तावत् स उत्पपात नभसि। तत्पश्चात् सोऽपि तथैवोत्पपात। जातं च तयोर्घोरं युद्धम्। तथा हि—कदाचिन्मन्त्रशक्त्या, कदाचिच्छस्त्रशक्त्या, कदापि क्षार रूक्षवचनैः, कदाचिद्रक्तापकर्षणैः, कदाचित्तीक्ष्णक्षुरप्रैः, कदाचिदुरगरूपैः, कदाचित्सिंहरूपैः, कदाचिद्रथव्यूहैः, कदाचिच्चक्रव्यूहैः। इत्थं परस्परं प्रहरतः स्म।

अथ चाकष्टतीक्ष्णतलवारेण कुमारेण पातितस्तस्य मौलेर्मुकुटः। सोऽपि ज्ञातकुमारबलवीर्यः शीलवतीं मुक्त्वा काकनाशं ननाश। तदा च कोपज्वलनज्वलितः कुमारोऽपि रे कातर! तिष्ठ तिष्ठ क्व यासि? अस्यां मे कृपाणधारामहानद्यां कुरु निजात्मशुद्धिम्। इति साक्षेपं साभिमानं च जल्पन् दधाव तत्पृष्ठौ। तदा च—सा शीलवती पश्यति यावद्दिक्चक्रं,

तावन्न सा नगरी, न जननीजनकौ, नापि वयस्यावृन्दं न चोद्यानं, नो वसन्तविलासः, न कुमारः, न च कश्चित्परिवारः, तत्सर्वमपश्यन्ती क्षिपति यावदितस्ततो दृष्टिं तावल्लाङ्गुलास्फालितमहीमण्डलं पश्यतिस्म तत्र मत्तपञ्चाननम् । कुत्रापि घुर्घुरेति घोरं घोषं घटयन्तं संमुखे चापतन्तं वराहम्, कुत्रचिदुत्क्षिप्तकरं करिराजं, क्वापि शृङ्गाग्रखण्डितशिलं गर्जन्तं महिषं, कुत्रापि चपलं कुपितं रक्ताक्षं कपियूथं क्वापि फणफूत्कारान् मुञ्चन्तं भुजगराजं, कुत्रापि च किलकिलेति कलकलोत्तालं वेतालं निभालयति स्म । दृष्ट्वा च तं तादृशं काननमुपालब्धवती दैवम् । हा दैव ! हतक ! निर्घृण ! त्वयाहं एकाकिनी क्व मुक्ता ? किं मया कुत्रापि कृतस्ते महान् कोऽप्यपराधः ? आसेवितानि महान्ति पापानि मयैव पूर्वजन्मनि, नास्त्यत्र कस्यापि दोषलेशः जीवेन स्वोपार्जितान्येवानुभूयन्ते, इति निश्चिन्वतीत्थं विभावयति स्म ।

किं अन्नभवे नियमो, काऊण न पालिओ मए विहिणा । नासो य कस्सवि मए किं अवहरिओ हयासाए ? ॥१॥ वीसंभमुवगओ वा, कोविहु वंचिओ मया कइया । अहवा कयावि कस्सवि, कुमइ कवडेण मे दिन्ना ॥ २ ॥ अहवा किं जणणीए, परिहासेणावि पियअवच्चाइं । विच्छोडियाइं किंवा, आहरणं कस्सवि हरियं ॥ ३ ॥ जं पुव्वभवनिवद्धं, तं खलु वेयंति पाणिणो सव्वे । ता सहियव्वं सव्वं, रे जिय किं विलवियेणेवं ॥ ४ ॥ अन्यच्च—जह संपयाइ हरिसो, विवेयवंतेहि नेव कायव्वो । तह आवयागएहिं पि, नवि सोओ गुरुअसत्तेहिं ॥

इति सा विवेककलिता शुद्धशीलसम्यक्त्वा उपसर्गवर्गसंसर्गसंगताऽपि दधार धैर्यम् । प्राप्तापि विषमां दशां स्वभावतोऽसमसाहससहाया भयमोहशोकरहिता एकाग्रमना, अदीनवदना, कर्माष्टकग्रन्थिनिर्मथनसमर्थपरमेष्ठिमहामंत्रस्मरणप्रवरणा

संसारतारणतरण्डोपमश्रीमुनिसुव्रतजिनेन्द्रं सस्माराऽनिशं शान्तमनाः ।

अथ चैकदा कदापि एकस्मिन् शिलातले आलिख्य श्रीमुनिसुव्रतजिनप्रतिच्छन्दं, सुरभिशतपत्रसहस्रपत्रैः समर्च्य, विहितपञ्चाङ्गप्रणामा तुष्टावेत्थम् ।

तंजहा—सिरिमुणिसुव्वय ! सुव्वय ! सुव्वयमुणिविंददिसियसिवमग्ग ! । सिवमग्गरहस्सुसारहि ! रहियजरामरणवरनाण ! ॥ १ ॥ वरनाणपयासियपुन्नपाव । पाविंधणोहसंजलण ! । संजलणकोहजलहर जलहरनिग्घोससमसद्द ! ॥ २ ॥ समसद्दसुबोहियसव्वजीव ! जीवाइकहियनवतत्त ! । तत्ततव ! तवविणासिय—सियगुरुकम्मगय गयगइय ॥ ३ ॥ इय थुणिओ चउगइगमणनास नासवियभवियभवदुक्ख ! । भवदुक्खकक्खपावय ! पावय मुत्तीइ जयसु चिरं ॥

स्तुत्वा चैवं भुवननाथं, पञ्चपरमेष्ठिनिहितादरा, यावत्तिष्ठति तत्र दृढशीलरतिः शीलवती, तावद्वरवस्त्राभरणभूषितवपुः, परिमितपरिवारपरिवृतः, संप्राप तत्र कश्चित्प्रधानपुरुषः । स च स्वभावतोऽपि करुणारसभृतहृदयः दृष्ट्वा तत्र तां तादृगवस्थां चिन्तयामास चेतसि । ननु एषा कापि सुतन्वी अमरी खेचरी राजपुत्री वा व्यसनगता दृढतरधर्मानुरक्ता च संभाव्यते केनापि हेतुना, तदिमां पृच्छाम्यत्रागमनकारणम् । धीरयामि भयसंभ्रान्ताम् । इत्थं मनसि संकल्प्य नत्वा च भुवनबन्धुप्रतिमां स्तुतिं चकारेत्थं मधुरस्वरेण—

तद्यथा—विन्नायसयलजयजीव, कम्मपरिणामठिइगइसहावा । दंसियसासयसुहठाण ! जय जयाणंद जिणइंद ! ॥ एगग्गमणा जे पहु ! धरंति अमणं पि नियमणंमि तुमं । पक्खित्तसयलजोगा, ते झाइज्जंति जोगिहिं ॥ कुंठाइ वि नाणीए,

थुणंति उक्कंठिया तुमं जेउ। थुवंति सव्वकुसला, ते खलु सुयकेवलीहिं पि॥ अणमिसनयणा जे पुण, तुमं नियच्छंति हरिसपडिहत्था। तेसि भत्तिइ मुहं अणिमिसपहुणोपि पिच्छंति॥ तुह कमकमललीणा, लीलाइ विमाण सुक्खमल्लीणा। ते भवसुहनिरवेक्खा, हवंति साहीणसिवसुक्खा॥ इय संथुओसि सामिय! मणवयकाएहि सुवयजिणंद! कुणसु पसायं मणवयकायाणमभावदाणेण॥

स्तुत्वा चैवं जगच्चन्द्रं, कृतप्रणामः सुशीलवत्यै, दत्तासनश्च तया, निषसाद तदासन्नभूभागे पप्रच्छ च सविनयः भद्रे! कासि त्वं? किं ते निवासस्थानम्? यूथभ्रष्टा हरिणीवाद्वितीयासहाया च कुतो भ्रमसि वराननेऽस्मिन्निषमे कानने? सागरमध्यवर्तिनि अत्र विषमे शैलशिखरे कथं प्राप्तासि? किमऽभिधानम्? कस्य भाग्यवतः सुता? किंच दुःखकारणम् ते? इति श्रुत्वानुभूतसुखस्मृतिजनितदुःखसंभाररुद्धकण्ठा निजपदगतदृष्टिः कथं कथमपि जल्पितुमारभत। भ्रातः! ये विषयसुखाभिलाषिणः, विरतिसुखपराङ्मुखा, सुलभानि तेषां महाव्यसनानि।

तथाहि—जन्ममृत्युजराव्याधि-रोगशोकाद्युपद्रुतः। क्लेशाय केवलं पुंसामहोभीमो भवोदधिः॥ सुखाय तु परं मोक्षो, जन्मादिक्लेशवर्जितः। भयशक्त्या विनिर्मुक्तो, व्याबाधावर्जितः सदा॥ हेतुर्भवस्य हिंसादि, दुःखाद्यन्वयदर्शनात्। मुक्तेः पुनरहिंसादिर्व्याबाधाविनिवृत्तितः॥ इति विभाव्य हे भद्र! मा पृच्छेमां मे कथाम्। नास्त्ययं कश्चित्पृच्छाविषयः। इमां च मदीयामखिलामपि कथां ज्ञास्यसि जनमुखात्।

किंच—नियदुःक्खयावि वत्ता, साहिज्जंति परस्स किमवि गुणं। न कुणइ सपरस्स पुणो, विसेसओ जणइ संतावं॥

अथ च निजगदे श्रेष्ठिसूनुना—भगिनि ! सत्यमिदं यतो हि स्वकीयं दुःखं प्रकाश्यमानं जगति हास्यप्रकर्षं जनयति, आपत्काले तु ये धीरा भवन्ति ये च विभवे संपन्नेऽपि गर्वरहिता ते जीवलोके प्रशंसास्पदीभवन्ति ।

" किं चुज्जंजं खलु आवआओ, बहुआओ हुंति मणुआणं । खंडणगहणत्थमणं, पावइ चंदोवि दिववसा ॥ "

ततो मा वह विषादम्, भवन्ति भाजनं संपदां ये आपद्गता अपि धैर्यं न जहति " " जीवन्नरो भद्रशतानि पश्यति " " एति जीवन्तमानन्दो नरं वर्षशतादपि " ॥ येषां बाहुबलं नास्ति, येषां नास्ति मनोबलम् । तेषां चन्द्रबलं देवि ! किं कुर्यादम्बरस्थितः ॥ १ ॥ भद्रे ! सर्वोऽपि खलु विपाकः स्वकृतकर्मणाम् । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाऽशुभम् । न क्षीयते कृतं कर्म कल्पकोटिशतैरपि ॥

" सुहियंपि विहि विनडई, दुहियंपि विडंबए विसेसेण । न गयइ बालवुड्ढं न मुयइ रायं च रंकं च ॥ नयमंततंतवाई, विज्जं नीरोगमहववाहिल्लं । छड्डेइ निग्घणो एस, हयविहि किंच सोएण " ॥

कियन्मात्रं शोचनीयमत्र मनुजन्मनि ? विधात्राऽयं संसारो दुःखानां निधानं विहितः ।

अन्यच्च—" अत्र च संसारकान्तारे समन्ताल्लग्नं प्रदीपनकं, प्रसर्पति धूमवितानं, प्रवर्धते ज्वालाकलापः, समुल्लसति वंशस्फोटरवः, धावन्ति लोकाः, संजायते कोलाहलः, रुदन्ति बालाः, आरारट्यन्तेऽन्धाः, क्रोशन्ति पङ्गवः, किलकिलायन्ते पिङ्गाः, मुष्णन्ति तस्कराः, दह्यन्ते सर्वस्वानि, परिदेवन्ते कृपणाः, सर्वथा संजातममातापुत्रीयमिति, ततस्तादृशे समस्तग्रामदाहिनि प्रदीपनके विबुद्धः कश्चिदेको मन्त्रवादी स चोत्थाय स्थितो ग्राममध्यवर्तिनि गोचन्द्रके कृतमनेनात्मकवचम्,

विहितं रेखया विशालमण्डलं, आहूता महता शब्देन ते ग्रामेयकलोकाः, यथाऽगच्छत यूयमत्र यदीयमण्डले प्रविशत, येन न दन्दह्यते, भवतां शरीराणि, ततस्तस्य वचनमाकर्ण्य केचित् स्वल्पतमा लोकास्तत्र तदीयमन्त्रमण्डले प्रविष्टाः ।

शेषा पुनरुन्मत्ता इव, हृतहृदया इवात्मवैरिका इव, ग्रहगृहीता इव, तस्मिन्नेव तथाविधे प्रदीपनके, दह्यमानेषु तथा सर्वस्वेषु प्रक्षिपन्ति तृणकाष्ठभारान्, विध्यापयन्ति घृतभृतघटैः । ततस्तैर्मण्डलस्थैः प्रोक्तम् । भो भो ! भद्रा ! नायमस्य प्रदीपनकस्य प्रशमोपायः, किं तर्हि ? यूयं जलेन विध्यापयतः अत्र वाऽनेन महात्मना विनिर्मिते मन्त्रमण्डले प्रविशत, येनेदं प्रशाम्यति भवतां यथास्मद्गृहेप्रशान्तम् ।

ते तु लोकास्तेषा वचनं केचिन्नाकर्णयन्ति, केचिदवधीरयन्ति, केचिदुपहसन्ति, केचिदुल्लुण्ठयन्ति, केचिद्विबध्नन्ति, केचित्प्रतिकूलयन्ति, केचित्तान्प्रति रुष्यन्ति, केचित्प्रहरन्ति, ततस्ते मण्डलस्था लोकाः स्थिताः तान्प्रतिमौनेन । केचित्तु पुण्यभाजस्तद्वचनं कुर्वन्ति—

इत्थं च नानाशास्त्रविचारसारवचनैः संजातबन्धुभावा सा शीलवती आरुह्य तद् यानपात्रमुत्तीर्य दुस्तरमपि वारांनिधिं, स्तोकदिनैरत्र प्राप । तेन च चन्द्रश्रेष्ठिनन्दनेन सोमनाम्ना वणिजा स्वगृहमागत्य सकलकथाप्रपञ्चकथनपुरस्सरं निजपितुरादेशमासाद्य भगिनीभावमुपगता सा रक्षिता निजगृहे कतिचिद्वासरान् । या च सा जयवर्म्मराजपुत्री शीलवती साऽहं सम्प्रति 'सुन्दरी' इति नाम्ना प्रसिद्धिमुपगतास्मि, संजातनामपरावर्ता, कृतत्वद्वचनाश्रया, पराधीना, प्रवासदुःखदुःखिता, सकलसुखपरित्यक्ता, निजस्वजनसंसर्गवर्जिता गमयामि दुःखेनाद्यापि कालम् ।

यतः—" ताव कुलीणा गुरुआ, विउसा सोहग्गारूवगुणकलिया। सुयधम्मसीलनिरया, जा नियठाणं न मुंचंति "।

अन्यच्च—' स्थानं प्रधानं न बलं प्रधानं, बलेन किं स्थानविवर्जितेन ?। जानामि नागेन्द्र ! तव प्रतापं, कण्ठं विना गर्जसि शङ्करस्य ॥ अन्यच्च यदिदं स्त्रीजन्म तदपि दुःखराशिरूपमेव।

यतः—" हिमगिरिवरप्पभूया, रयणायरसंगया य जयपयडा। सुहियावि सया महिला, वहइ जलं अमरसरियव्व ॥ १ ॥

आगमेऽपि—अणंता पावरासीओ, जया उदयमागया। तया इत्थित्तणं पत्तं, सम्मं जाणाहि गोयमा ! ॥ २ ॥

तथा च—हे देव ! अप्रस्तावे कथितं हि वाक्यं कुत्रापि शोभा न लभते। सख्या चन्द्रलेखया पृच्छमानमपि स्वकीयमुदन्तजातम् दुःखमूलमिति ज्ञात्वा न मया प्रकटितम्। अद्य तु तत्सर्वं त्वत्प्रणयेन कथितम्। मन्ये यतो मया कुलदेवतावचनं न पालितम्, ततो हि एतद्वज्रपातकल्पमनल्पं दुःखमन्वभूवम्।

श्रुते चास्मिन् मदीये वृत्ते केषां हृदयद्रावो न भविष्यति ? धन्यास्ते ये विरतिरताः स्वपरोपकारव्यापारनिरताः दृष्टेऽपि विषयकारणे कुमारे जाता ममेयमवस्था। यदि चासेविष्ये तदा न जाने का गतिरभविष्यत् ? हे नरनाथ ! अद्य यावत्सर्वाणि दुःखानि मया विषयप्रसङ्गेनैव लब्धानि, ततः स्वभावतोऽपि विषयसुखपराङ्मुखायाः अस्या ते बालायाः विषयेषु प्रवृत्तिं कथंकारं कारयामि ?। एषा हि सुदर्शना ज्ञातपूर्वभवदुःखा अनुभूतशमसाम्राज्यसुखा कथं स्वीकरिष्यति पाणिग्रहणं मदीयवचनेनापि ? ॥

यतः—जं च कामसुहं लोए, जं च दिव्वं महासुहं। वीयरायसुहस्सेय णंतभागंपि नग्घइ ॥ १ ॥

यदि च कथिते त्वदभीष्टे न स्वीकृतमनया तदावश्यमहं हास्यास्पदीभविष्यामि जनतासु । मयि तु इयमद्यापि विश्रम्भ-भाजनं कथिते त्वस्मिन्हृत्प्रतिकूलेऽर्थे भविष्यत्यस्याः प्रातिकूल्यं ममोपरि ॥

जं जम्मो नीयकुले, जोवणवंतस्स जं च दालिद्दं । वरसीलरूवरहियं, जं कुकलत्तं च पडिकूलं ॥ १ ॥ जं वा हिल्लं देहं, जं च विओगो समं सबंधुहिं । जं च पवासो ( से ) वसणं, सेवावित्तीइ निव्वहणं ॥ २ ॥ जं मुक्खत्तं दूयत्तणं ( च ) जं भोयणं परायत्तं । तं एय सव्व पाव—पुंजकडुरुक्खफलमसुहं ॥ २ ॥

इति हेतोः नहि उपदिशामि किमपि सुदर्शनाम् । प्रार्थनाभङ्गो हि आजन्म दहति चेतः प्राणिनाम् । यतः केनापि कथितम् " वचस्तत्रैव वक्तव्यं यत्र तत् फलवद् भवेत् " इति । नयहेतुयुक्तिकलितं शीलवतीकथनं कथानकं च श्रुत्वा जगाद जगतीपतिः । भद्रे ! सत्यमिदं सर्वम् । किन्तु प्रोक्तं प्राक्तनपुरुषैर्नीतिशास्त्रेषु—

" महिपडियावि दुकरिणो, तीरंति न लंघिउं तुरंगेहिं । इयरेहिं समा विसमठ्ठियावि नहु हुंति जे गुरुआ ॥ १ ॥

त्याज्यं न धैर्यं विधुरेपि काले " ॥ अत्र स्थिता त्वं कथमपि विषादं न कुरु । यतोहि–यन्मदीयं तत्सर्वं त्वदायत्तम् ।

रक्षिताखिलक्षितितपोवनः त्रातचतुराश्रमः सर्वसागरैरिवोत्पादितगाम्भीर्यः ज्वलन इव ज्वलितप्रतापः, संजातसान्द्रचन्द्रोदय उदयपर्वत इव प्रविततयशोवितानो, मुनिवर इव दृढनयो विधृतशमः यस्ते जनकः स मे मित्रम् । अतो भद्रे ! न कार्या कापि चिन्ता । नहि सर्वेषां सर्वदा सदृशी दशा ।

अपि च—" आवइगयावि गयसंपयावि देसंतरंमि पत्तावि । ठाणच्चुआवि गुरुआ, ठाणं पावंति गुरुययरं ॥ १ ॥

स्थानभ्रष्टोऽपि लभते, महिमानं गुणी नरः। अपि भ्रष्टं तरोः पुष्पं, शिरसा कैर्न धार्यते ? ॥ २ ॥ अत्रान्तरे ऋषभदत्तः प्राह—हे राजन् ! एषा हि जयवर्म्मराजप्रियपुत्री, जितशत्रुनृपतेर्भागिनेयी कर्मवशादिमां विषमावस्थां प्राप्तास्ति। ममापि भागिनेयी अत्रहि महता पुण्ययोगेन प्राप्ता। राज्ञा प्रोक्तम् एषा सुदर्शना राज्ञः (चंद्रलेखाया अपि) भगिनीपुत्री वर्तते अतोऽत्र सर्वेऽपि स्वजना एव मिलितास्सन्ति। इत्यादि विविधवाग्युक्तिभिः सुन्दरीं संतोष्य राज्ञा पृष्टम्। हे भद्रे ! कीदृशोऽसौ जैनो धर्मः यस्त्वया स्वीकृतः ? कथय सविस्तरम्। अत्रार्थे महती मे सुश्रूषा[1] वर्तते—

यतोहि—जाणेयव्वं सव्वं, कायव्वं जं होइ अप्पहिअं। पढमं नाऊण जणो, पच्छा कज्जं समायरइ ॥ १ ॥

अत्रान्तरे—कश्चिचारणश्रमणः नन्दीश्वरं जिगमिषुर्व्रजन्नाकाशमार्गेण धर्मार्थिनं नृपतिं धर्मश्रवणजातौत्सुक्यं विलोकयतिस्म। स च प्रवरावधिज्ञानालोकितनिखिलभावः चिन्तयामास चेतसि। यतोऽयं भूपालः धर्मकर्म्माभिमुखः लब्धकर्मविवरो वर्तते प्रतिबोधयोग्यः। इयं च पुनरस्ति शाश्वति मर्यादा—

यतः—"जिणभवणबिंबपूया-दाणदयातवसुतित्थजत्ताण। धम्मोवएसदाणं, अहियं भणियं जिणंदेहिं ॥ १ ॥ एगं वि जो पबोहइ, पावासत्तं जिणिंदधम्मम्मि। सव्वजियाण वि दिन्नं, अभयमहादाणमिह तेण ॥ २ ॥ धम्मोवएसदाणं, जिणेहिं भणियं इमं महादाणं। सम्मत्तदायगाणं, पडिउवयारो जओ नत्थि ॥ ३ ॥ सम्मतमहादाणं, जीवो जो देइ धम्मबुद्धीए। तं नत्थि जए जं तेण नय विढत्तं सुहं पुन्नं ॥ ४ ॥ तियसिंदनमियचलणावि जिणवरा जं तिजोयणसयाइं। जीवस्स बोहण-

[1] अत्र शुश्रूषाशब्देन श्रोतुमिच्छाविवक्षिता न तु सेवा।

त्थं, एगस्सवि पावदुहियस्स ॥ ५ ॥ पडिबोहिओय, जीवो धम्मं आयरइ वज्जए पावं । जम्मे जम्मे सुहिओ, हवेइ सासयसुहं लहइ ॥ ६ ॥

तस्मात्—प्रतिबोधयितव्यः सपरिवारोऽयं नरपतिः । विशेषतस्तु जातिस्मरणलब्धपरमार्था इयं सुदर्शना । इति संचिन्त्य चेतसि उत्ततार नभस्तलान्महामुनिरुद्भासयन् देहप्रभया दिक्चक्रवालम् ।

तदा च—प्रहृष्टो भूपतिः, परितुष्टा परिषत्, विरचितं प्रशस्तमासनम्, कृता अन्या अपि समाः तत्प्रतिपत्तयः । समाजग्मुस्तत्रापरेपि नागराः वेगेन । स्थितास्सर्वे यथास्थानम् । विलोकितोऽयं मुनिः सर्वैः सभाजनैः कौतुकोत्तान लोचनैः । नतोऽयं श्रद्धाबन्धुरकन्धरैः । ससम्भ्रममुत्थाय पतितस्तच्चरणयोः सुंदरीसुदर्शनाश्रेष्ठिऋषभदत्तप्रमुखोऽखिलोऽपि धार्मिको जनः । दत्तोऽनेन परमपदकल्पपादपनिरुपहतबीजभूतो धर्मलाभस्तेभ्यः । तदा च नत्वा प्राञ्जलिपुटा सुदर्शना विज्ञपयति । भगवन् ! केनापि पूर्वकृतपुण्यप्राग्भारेण संजाता ते सु दृष्टिः पीयूषवृष्टिः । हे प्रभो ! भवभयभीतानां प्राणिनां त्वद्दर्शनमेवालम्बनम् ।

अज्ज कयत्थो जम्मो, अज्ज कयत्थं च जीवियं मज्झ । अज्ज कयत्थे नित्ते जं लद्धं दंसणं तुज्झ ॥ १ ॥

तस्मात् प्रसीदन्तु भगवन्तः कथयन्तु मे पूर्ववृत्तम् । कथं मया भृगुकच्छपुरे लब्धो तिर्यग्भवः । केन कर्मणा वेधजं दुःखं लब्धम् । केन वा निजापत्यवियोगो जातः ? केन च सुसाधुसंयोगो जातः ? कथं वातन्मुखान्महामन्त्रप्राप्तिः ? कथं पुनस्तिर्यग्योनेर्मनुष्यभावः । इति श्रुत्वा परोपकारपरायणमतिर्जगाद यतिपतिः । हे भद्रे ! श्रृणु तावत्ते पूर्ववृत्तम् । नन्वस्त्ययं सर्वोऽपि कर्मपरिणामः येन जीवैः दुःखं सुखम् च प्राप्यते ।

तद्यथा—रागद्दोसवसगओ, जीवो चउविहकसायपज्जलिओ। दढमोहरज्जुबद्धो, आरंभपरिग्गहासत्तो ॥ १ ॥
परपरिहवपरनिंदा—परधणपरदारपरविवायरओ। जीववहबंधनिरओ, निबद्धकम्मो भवं भमई ॥ १ ॥
यदाह—कर्म्मार्पितं क्रमगतिः पुरुषः शरीर—मेकं त्यजत्यपरमाभजते भवाब्धौ। शैलूष[1]योषिदिव संसृतिरेनमेषा, नाना विडम्बयति चित्रकरैः प्रपञ्चैः ॥ १ ॥ दैवाद्धनेष्वधिगतेषु पटुर्नकायः, काये पटौ न पुनरायुरवाप्तवित्तम्। इत्थं परस्परहतात्मभिरात्मधर्मैर्लोकं सुदुःखयति जन्मकरः प्रबन्धः ॥ २ ॥ आस्तां भवान्तरविधौ सुविपर्य्ययोऽय—मत्रैव जन्मनि नृणामधरोधभावः। अल्पः पृथुः पृथुरपि क्षणतोऽल्प एव, स्वामीभवत्यनुचरः स च तत्पदार्हः ॥ ३ ॥ वैचित्र्यमित्थमनुभूय भवाम्बुराशेरातङ्कवाडवविडम्बितजन्तुवारेः। को नाम जन्मविषपादपपुष्पकल्पैः, स्वं मोहयेन्मृगदृशां कृतधीः कटाक्षैः ? ॥ ४ ॥
अन्यच्च—पुढविनिकाए सत्तसु, सत्तसु लक्खेसु आउकायंमि। तेउनिकाए सत्तसु, सत्तसु तह वाउकाएसु ॥ १ ॥ दससुय पत्तेयवणे, चउदसलक्खेसु णंतकायवणे। दुसु दुसु लक्खेसु पुढो, बितिचउरिंदीसु जोणीणं ॥ २ ॥ सुरनरयतिरियवासे, पत्तेयं चउसु चउसु लक्खेसु। ईसाविसायवहबंध—पमुहदुक्खाइं पि सहेइ ॥ ३ ॥ मणुअत्तणंमि चउदस—लक्खेसु सकम्मनियलिओ जीवो। परिभमइ सरणरहिओ, जम्ममरणेहिं अकंतो ॥ ४ ॥
अन्यच्च—मणवयणकायदुट्ठो, परिग्गहं कुणइ हणइ बहुजीवे। वसणासत्तो लोही, निस्सीलो वच्चए नरयं ॥ १ ॥ सढचित्तो गूढमणो, समग्गपणासणो ससल्लो य। नगणई परलोयहियं, वच्चइ तिरिएसु माइल्लो ॥ ६ ॥ दुट्ठकसाओ कूरो,

---

१ नटीव।

मायाकवडेहिं जो परं मुसइ। पुरिसो वि होइ महिला, रोहग्गकलंकिया दुहिया ॥ ७ ॥ धम्मपरा रिउभावा गुरुभत्ता सीलगुणसमाउत्ता। महिलावि होइ पुरिसो, सोहग्गसुरूवगुणकलिओ ॥ ८ ॥ हयकरहवसहपसवाण कुणइ निल्लंछणं अहम्मो जो। परभवइ परं वेसो, नपुंसओ होइ दुट्ठमइ ॥ ९ ॥ अक्खुद्दो दारणओ, न कुणइ कोहं न भासए अलियं। मज्झत्थमणो बंधइ, मणुसत्तं सव्वजीवहिअं ॥ १० ॥ दुक्करतवनियमसुसंजमेहिं दुद्धरमहव्वए हिं च। उवसमगुणेहिं जुत्तो, देवत्तं पावए जीवो ॥ ११ ॥ खवियकसायचउक्को, परिसोसियपुन्नपावपब्भारो। उप्पन्नविमलनाणो, सिद्धिसुहं सासयं लहइ ॥ १२ ॥

इति हि संक्षेपेण पुण्यपापफलं प्रोक्तम्। इदानीं तु शृणु यत्त्वयाऽनुभूतम् पूर्वजन्मनि। इतस्तृतीयभवे। तथाहि—जम्बूद्वीपस्य भारते वर्षे वैताढ्यशैलदक्षिणश्रेण्यां। गगनवल्लभनाम्नि नगरे अमितमतिरमितगतिर्नामनरपतिः करोति स्म प्राज्यं राज्यम्। जयसुन्दरी, च तस्य सुन्दरी, प्राच्यपुण्यप्रभावलब्धं विषयसुखमनुभवतोस्तयोर्जातैका सरूपा पुत्री। विहितं च तदभिधानं "विजया" इति। सा चेन्दुकलेव वियति, कल्पलतिकेव नन्दनवने, पयोजिनीव महाह्रदे, सुखसलिलमहानदे इव राजकुले प्रवर्धमानानङ्गरङ्गभूमिमिव सकलकलाकलापनिर्विकलं यौवनमलञ्चकार। कदाचिच्चोत्तरश्रेणिस्थां सुरम्यां नगरीं प्रति सखीमिलनार्थं व्रजन्त्या तया दृष्टः कश्चित्कुर्कटजातीयोऽनल्पदर्पः सर्पः। तं चापशकुनबुध्या निरीक्ष्य मोहमूढा स्वार्थैकरूढा सा खेचरसुता तीक्ष्णबाणेन जघान। विपद्य च सद्यः स सर्पजीवो भृगुकच्छेऽतुच्छमत्सरधरः सर्वदा सकलजन्तुजातभयङ्करो म्लेच्छस्समजनि। खेचरपुत्रीजीवस्तु त्वमत्रानुभूयैकं तिर्य्यग्भवं राजपुत्रीत्वेन समुत्पन्ना। यच्च त्वया तदानीं निर-

पराघोऽपि सर्पो विनाशितस्तत एव त्वामपि स जघान। यतो हि जीवेन कृतं कर्मावश्यं भोक्तव्यमेव।

अथान्यदा कदापि तस्मिन्वैताढ्यशैलशिखरे रत्नसञ्चयनगराधिपतिना सुवेगाभिधेन विद्याभृता श्रीआचिरेयतीर्थकृच्चैत्ये पूजाऽऽरब्धाऽभूत्, तदा च तत्र त्वमपि गतवती तत्पूजां प्रेक्षमाणा सञ्जातशुभात्मपरिणामा परमं बोधिबीजं प्राप। तथा च तत्र जिनायतने पूजादर्शनार्थं समायातानां दुश्चरतपश्चरणनिरतानां साध्वीनां कृतं वन्दननमस्कारादिकं वैयावृत्यं च, तत्सेवा-प्रभावेन लब्धस्त्वया त्रिभुवनसारो नमस्कारः पूर्वजन्मनि। इदानीं च जातिस्मरणं जैनधर्मश्च तद्वशादेव लब्धौ।

तंजहा—वेयावच्चं संघस्स पूयणं जिणकहाए आणंदो। वत्थन्नपत्तसिउज्झा—सयणासणसंपयाणाई ॥ १ ॥ एयाण सम-ग्गाणं, पुण्णनिमित्ताण तहय अन्नाणं। उत्तमपुण्णनिमित्तं, वेयावच्चं जओ भणिअं ॥ २ ॥ पडिभग्गस्समयस्सव, नासइ चरणं सुयं अगुरनाए। नहु वेयावच्चचियं, सुहोदयं नासए कम्मं ॥ ३ ॥ तथा-सव्वं खु पडिवाई, वेयावच्चं अपडिवाई।

अथ चैकदा द्राक्षावनमध्यस्थं, चतुर्द्वारं, श्रीनाभेयजिनचैत्यं दृष्ट्वा प्रमोदमेदुरमानसा त्वं तत्र प्रविवेशिथ। तत्र च तदा सुररमणीसमुदायसमन्वितः सुरपतिर्द्वात्रिंशत्प्रकाररचनारमणीयं नाट्यं चकार। तत्रस्था त्वमपि यावत्तत्प्रेक्षणकं प्रेक्षसे तावत्कं-स्याश्चिदमराङ्गनाया नूपुरं पपात तवोत्सङ्गक्रोडे। त्वया तु अतुच्छमूर्च्छाभिभूतया सहसा संगोपितं समारोपितं च स्वात्मनि दूषणं विहाय कुलभूषणम्। यतो हि स्वभावतो हि लोभाभिभूतानार्यः। अनृतं साहसं माया मूर्खत्वमतिलोभता। अशौचं निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥ गृहीत्वा तन्नूपुरं सुराङ्गनाभ्यो भीता त्वं त्वरितं समागता गगनवल्लभपुरे। समाप्य च निजायुर्विद्याधरीभवाच्च्युत्वा भृगुकच्छपुरपरिसरारामभूमौ वटविटपिशाखायां शकुन्तिकात्वेन समुत्पन्ना। यतो

गतिर्मत्यनुसारिणी—

अट्टेण तिरियजोणी, रुद्दज्झाणेण गम्मए नरयं । धम्मेण देवलोयं, सुक्केणं पावए मुक्खं ॥ १ ॥

हे राजतनये । तस्मिन् भवे त्वया देवभवने आभरणापहारः कृतः अत एव त्वं तिर्यग्योनौ समुत्पन्ना । अपत्यैः सह विप्रयोगश्च संजज्ञे ।

अत्रान्तरे च स्वसुतावृत्तान्तश्रवणसञ्जातप्रमुदितस्वान्तः क्षमाकान्तः विज्ञपयतिस्म । हे धर्मोपदेशबान्धव ! जिनेन्द्रधर्मे तपःसंयम–प्रभावात् किमपि दुःसाध्यं नास्ति । परोपकाराय सतां विभूतयः, अतो हे तारक ! हे मोहनिवारक ! संसारसागरे पतितं मां समुद्धर । उपदिश यानपात्रकल्पं पूरिताऽशेषसंकल्पं जिनदेशितं धर्ममिति । इत्थं समुपजातजिज्ञासाबुद्धये, नरेन्द्राय प्रणिजगाद मुनीन्द्रः । भोः सुमते ! वसुमतीपते ! शृणु तावत्संक्षेपेणाभिधीयमानं धर्मस्वरूपम् ।

तद्यथा—"जस्स न सयं विवेओ, भवसयदुलहंपि सो लहेऊण । कहवि जिणधम्मरयणं हारइ जम्मंधरोरुव ॥ १ ॥ सो पुण धम्मो दुविहो, जिणेहिं भणिओ अणंतनाणीहिं । सिवनयरगमनमग्गुव, साहुधम्मो य गिहधम्मो ॥ २ ॥ तत्थाइमंमि सावज्ज–कज्जपरिवज्जणुज्जओ उज्जुओ । पंचमहव्वयपव्वय–गुरुभारमुव्वहणपवणो ॥ ३ ॥ समिई गुत्तिपवित्तो, अममत्तो सत्तुमित्तसमचित्तो, परपरिवायविरतो अवगयतत्तो महासत्तो ॥ ४ ॥ एवं गुणसंजुत्तो, गुरुभत्तो कुणइ जो वयं सत्तो । सो अचिरेणं पावइ, सुमग्गलग्गोपवग्गपुरं ॥ ५ ॥ तदकरणासत्तेहिं, सावग्गधम्मो वि होइ कायव्वो । कालेण सोवि सिव सुह—दायगो-सुणसु तं इण्हि ॥ ६ ॥

तथाहि—

तसजीववहनिवित्ती, कन्नालीयाइमासणनिसेहो। परदव्वपरिच्चाओ, परिहारो परकलत्तस्स ॥ ७ ॥ परिमाणसंतपरिग्गहस्स इच्छा य दुविहतिविहाई। नरवइ! एयाइं अणुवयाइं भवजलहिमहणाइं ॥ ८ ॥ दिसिपरिमाणं पढमं, बीयं भोगोवभोगमाणं च। जत्तेण वज्जणीओ, चउविहोणत्थदंडो य ॥ ९ ॥ सामाइयं च देसावगासियं पोसहो चउब्भेओ। साहूण संविभागो, चउरो सिक्खावयाइं ॥ १० ॥

तथाच—" धर्मो मंगलमुत्कृष्टं, धर्मः स्वर्गापवर्गदः। धर्मः संसारकान्तारो-लंघने मार्गदेशकः ॥ १ ॥ धर्मो मातेव पुष्णाति, धर्मः पाति पितेव च। धर्मः सखेव प्रीणाति, धर्मः स्निह्यति बन्धुवत् ॥ २ ॥ धर्मः संक्रमयत्युच्चैर्गुणान् गुरुरिवोज्ज्वलान्। धर्मः प्रकृष्टां स्वामीव, प्रतिष्ठां च प्रयच्छति ॥ ३ ॥ धर्मः शर्ममहाहर्म्यं, धर्मो मर्मारिसंकटे। धर्मो जाड्यच्छिदो धर्मो, धर्मो मर्माविदंहसाम् ॥ ४ ॥ धर्माज्जन्तुर्भवेद्भूपो, धर्माद्रामोर्द्धचक्रयपि। धर्माच्चक्रधरो धर्माद्देवो धर्माच्च वासवः ॥ ५ ॥ ग्रैवेयकानुत्तरेषु, धर्माद्यात्यहमिन्द्रतां। धर्मादार्हन्त्यमाप्नोति, किं किं धर्मान्न सिध्यति ? ॥ ६ ॥ दुर्गतिप्रपतज्जन्तु–धारणाद्धर्म उच्यते। दानशीलतपोभाव–भेदात्स तु चतुर्विधः ॥ ७ ॥ तत्र तावद्दानधर्मस्त्रिप्रकारः प्रकीर्तितः। ज्ञानदानाभयदानधर्मोपग्रहदानतः ॥ ८ ॥ दानं धर्मानभिज्ञेभ्यो वाचनादेशनादिभिः। ज्ञानसाधनदानं च, ज्ञानदानमितीरितम् ॥ ९ ॥ ज्ञानदानेन जानाति जन्तुस्तस्य हिताहितम्। वेत्ति जीवादितत्त्वानि, विरतिं च समश्नुते ॥ १० ॥ ज्ञानदानादवाप्नोति, केवल-

१ अंहसां पापानां मर्माविद् मर्मव्यधनकारी।

ज्ञानमुज्ज्वलम् । अनुगृह्याखिलं लोकं, लोकाग्रमनुगच्छति ॥ ११ ॥ ददात्यभयदानं यो, दत्तेऽर्थान् सोऽखिलानपि । जीविते सति जायेत, तत्पुमर्थचतुष्टयी ॥ १२ ॥ जीविताद्परं प्रेयो जन्तोर्जायेत जातुचित् । न राज्यं न च साम्राज्यं देवराज्यं न चोच्चकैः ॥ १३ ॥ इतोऽशुचिस्थस्य कृमेरितः स्वर्गसदो हरेः[1] । प्राणापहारप्रभवं, द्वयोरपि समं भयम् ॥ १४ ॥ भवेदभयदानेन, जनो जन्मान्तरेषु हि । कान्तो दीर्घायुरारोग्य—रूपलावण्यशक्तिमान् ॥१५॥ धर्मोपग्रहदानं तु, जायते तत्र पञ्चधा । दायकग्राहकादेयकालभावविशुद्धितः ॥ १६ ॥ तत्र दायकशुद्धं तन्न्यायाप्यार्थो ज्ञानवान् सुधीः । निराशंसोऽनुतापी च दायकः प्रददाति यत् ॥ १७ ॥ इदं चित्तमिदं वित्तमिदं पात्रं निरंतरम् । संजातं यस्य मे सोऽहं, कृतार्थोऽस्मीति दायकः ॥ १८ ॥ सावद्ययोगविरतो गौरवत्रयवर्जितः । त्रिगुप्तः पञ्चसमितो, रागद्वेषविनाकृतः ॥ १९ ॥ निर्ममो नगरवसत्यङ्गोपकरणादिषु । ततोऽष्टादशशीलाङ्गसहस्रधरणोद्धुरः ॥२०॥ रत्नत्रयधरो धीरः समकाञ्चनलोष्ठुकः । शुभध्यानद्वयस्थात्तुलजिताक्षः कुक्षिशम्बलः ॥ २१ ॥ निरन्तरं यथाशक्ति नानाविधतपःपरः । संयमं सप्तदशधा धारयन्नविखण्डितम् ॥ २२ ॥ अष्टादशप्रकारं च ब्रह्मचर्यं समाचरन् । यत्रेदृग् ग्राहको दानं, तत्स्याद् ग्राहकशुद्धिमत् ॥२३॥ देयं शुद्धं द्विचत्वारिंशद्दोषैर्विरहितं भवेत् । पानाशनखाद्यस्वाद्यवस्त्रसंस्तारकादिकं ॥२४॥ कालशुद्धं तु यत् किंचित् काले पात्राय दीयते । भावशुद्धंत्वनाशंसं, श्रद्धया यत् प्रदीयते ॥२५॥ न देहेन विना धर्मो, न देहोऽन्नादिकं विना । धर्मोपग्रहदानं तद्विदधीत निरन्तरम् ॥२६॥ शीलं सावद्ययोगानां, प्रत्याख्यानं निगद्यते द्विधा तद्देशविरतिसर्वविरतिभेदतः ॥२७॥ यत्तापयति कर्माणि, तत्तपः परकीर्तितम् । यद्बाह्यमनशनादि,

---

१ इन्द्रस्य ।

प्रायश्चित्तादि चान्तरम् ॥२८॥ रत्नत्रयधरेष्वेका, भक्तिस्तत्कार्यकर्म च । शुभैकचिन्ता संसारजुगुप्साभावना भवेत् ॥२९॥"

इति श्रवणसमुत्पन्नधर्मरतिः जगतीपतिर्यतिपत्युपदिष्टद्विविधधर्माद्यानगारधर्म धरणा-समर्थानमात्मानं मत्वासुदर्शना-शीलवतीसंयुतो जग्राह गृहीधर्मम् ॥ "यथा राजा तथा प्रजा" इति वाक्यं सत्यापयन्निव स्वीचक्रुरन्येऽपि केऽपि मोक्षफलैक-कन्दाम् तामेव सत्यसन्धाम् । तदशक्ताश्चेतरे दधुरमलं सम्यक्त्वरत्नमसपत्नम् । केचित्तु मधुमांसमद्यम्रक्षणभक्षणनियमान् सविनोदं सप्रमोदं च लेभिरे ।

अत्रान्तरे च सुदर्शना नत्वा तातपादपद्मं सविनयं प्राह प्राञ्जलिपुटा । तात ! प्रसीद मदुपरि, प्रेषय भृगुकच्छपुरे । येन हि तत्र गत्वा जिनचैत्यं कारयित्वा सफलयामि स्वात्मानम् । नमस्कृत्य च गुणगणरत्नरोहणकल्पान् भवभयहरणान्, यतिपतिचरणान्, कुर्वे कृतकृत्यं जनुः, श्रुत्वैतद्वाक्यं संजातमनःपरितापो जगतीनाथो विससर्ज सर्वामपि जनसन्ततिम् । एकान्तमवलम्ब्य स्माह धनपतिं प्रति, धर्मबन्धो ! इयं मे प्रियपुत्री अप्राप्तवियोगदुःखा अदृष्टपरमण्डला अज्ञातविदेशभाषा अदृष्टव्यसना अननुभूतापमाना कृतजनपदसम्माना, आस्ते सदासुखिता निराबाधा—

ततो हे श्रेष्ठिन् ! कथमिमां प्राणप्रियां पुत्रीं प्रेषयामि विदेशे ? एषा हि सुखलालिता, शिरीषकुसुममिव सुकुमारा, कथं सहिष्यति मार्गक्लेशम् ? गतवत्यां चास्यां कथं स्थास्यति जननी अस्याः कथंकारं निर्गमिष्यन्ति मे दिवसाः ? निरुद्धा तु न स्थास्यति उत्साहेन, निरुत्साहायाः रक्षणेनापि किं ? अतो हे वरेण्य ! एषा मया तवैवार्पिता रक्षणीया स्वजीवितमिवा-पायेभ्यो पालनीया सततं स्वोचरितवाचेव, किंबहुना ? न्यासं मे जीवितस्येति 'प्रमाणं मे प्रभोर्वच,' इत्युक्त्वा स्थितः

श्रेष्ठी कतिचिद्दिनानि प्रतीक्षमाणः शुभमुहूर्तम् ।

अत्रान्तरे—आजगामानन्दपरिस्पन्दवर्जिताचंद्रलेखा तत्र, प्राह च सादरं शुभदर्शनां सुदर्शनाम् । हे पुत्री ! वितीर्णासि गुरुपुण्यप्राग्भारयोगेन कुलदेवतया । अद्यापि न दृष्टासि स्ववयस्यावृंदपरिवृता रथ्यासु क्रीडंती कंदुकक्रीडाभिः । न चापि दृष्टासि वसंतमासे सहचरिगणाऽऽवृता मज्जनजलभिन्नमुखशोभा, न च विलोकितासि परिनयनलक्ष्मीलक्षितसर्वावयवाऽतो हे वत्से ! यावन्न पूरयसि अस्मन्मनोरथसंततिं तावन्न गंतुमर्हसि भृगुकच्छपुरं प्रति ।

अथ च प्राह सुदर्शनापि समयोचितं, हे मातः ! सत्यमिदं सर्वं परंचैतन् मनुष्यजन्म सर्वगुणरत्नरोहणकल्पं तथापि जिनधर्मरहितमरण्यमालतीवन्निष्फलमेव ।

अन्यच्च—असुइविलित्तसरीरो, पयपाणाउलियवयणदुग्गंधो । मच्छिहि भणिहिणंतो, कह धम्मं कुणई बालत्ते ? ॥ १ ॥ विसयासत्तो सत्तो, वामारत्तो सुभोगगयचित्तो । परधणदारपसत्तो, विसयमहाजलणसंतत्तो ॥ २ ॥ नवजोवणमयमत्तो, जीवो संसारदुक्खभगणंतो । अलहंतो विरइसुहं, कह धम्मं जोवणे कुणइ । (जुयलं) ॥ ३ ॥ बुड्ढत्तणे वि बालुव्व वयणलालाविलीणसव्वंगो । जंपइ लल्लविलल्लं, गयदंतो कंपियावयवो ॥ ४ ॥ सद्दिजंतोय पुणोपुणोवि, कह कहवि देइ पडिवयणं । बहुविहवगवऊ, ईसरुव बुड्ढत्तणे पुरिसो ॥ ५ ॥ जरजज्जरियसरीरो, पुत्तायत्ताई सयलरिद्धीए ॥ अगणिज्जंतो नियपरियणेण, कह कुणइ सो धम्मं ? ॥ ६ ॥

स्वरूपतोहिखनिरयं संसारः एतादृशानां दुःखानां । न ह्यस्मिन् कोऽपि कस्यापि स्वकीयः परकीयो वा । विहितैकत्रतरौ

निशानिवासानां विहगानामिव, सागरतटोपरिकृतैकत्रस्थितीनां पान्थानामिव, स्वजनानां कः संयोगो वियोगो वा ? किं पुनस्तत्र दुःखकारणं ? सर्वेऽपि स्वस्वकर्मानुभावेन भिन्नगतिगामिनः । काऽत्र परिदेवना ? ।

देवाण कोवि चविउं, समागओ कोवि नरयवासाओ । तिरियगईए अन्नो अन्नो, इह मणुअवासाओ ॥ १ ॥ वच्चंति-पुरो मरिउं, खणंपि न रहंति अन्नमन्नस्स नियकम्मनियलियाइं, पुणोवि जो जत्थ सो तत्थ ॥ २ ॥ माया मरेवि धूया, धूया माया पियावि पुण पुत्तो । पुत्तो मरेवि जणओ, उप्पज्जइ कम्मदोसेण ॥ ३ ॥ बंधूवि रिउ सत्तुवि बंधवो, नियसुओवि भत्तारो । भत्तारो विहु पुत्तो मरिऊण हवेइ कम्मवसा ॥ ४ ॥ सुयणावि मरणकाले । सकज्जनिरया परंमुहा ठंति । पुत्तावि अत्थलुद्धा, कुद्धा गेहं विलुंपंति ॥ ५ ॥ ससिणेहाविय भज्जा, होहिंति अमंगलं च मन्नंति । न छिवई पइदेहं, गवेसए अत्थठाणाइं ॥ ६ ॥

"संजोगमूला जीवेण पत्ता दुक्खपरंपरा" इति परमपुरुषप्रणीतागमवचनमालंब्य स्थेयं स्वस्वभावे । हेयः सर्वत्रसंसारे ममत्वभावः । देयो धर्मार्थिनां धार्मिककार्येषु सततं सहायः ।

अपि च—अइगुरुअकिलेसावज्जिओवि, अत्थो सया विरोहकरो । पगमेगंपि असारो, न वच्चए सह मरंतेहिं ॥ १ ॥ ता मा करेह खेयं, असारदेहेण सारमप्पहियं । जं किज्जइ तं लाहो भाडयगयसगडमुल्लेण ॥ २ ॥ अथिरेण थिरो समलेण निम्मलो, परवसेण साहीणो । देहेण जइ विढप्पइ, धम्मो तो किं न पज्जत्तं ? ते धन्ना जे निज्जियसुरवहुरूवाहिं तरल-नयणाहिं मोहिज्जंति न मणवल्लहाहिं रइकुसलदइयाहिं ॥ ४ ॥ ते धन्ना पंचिंदियतुरंगमे जे तिगुत्तिवग्गाए संतोसमहा-

नंदणवणंमि खंचेवि धारंति ॥ ५ ॥ ते धन्ना कामगइंद—वियडकुंभत्थलं दलेऊण । बंभवयनियमसहिया, कुव्वंति तवं महासत्ता ॥ ६ ॥ ते धन्ना जे चउविह—कसायजलणं खमाइसलिलेण । विज्झविऊणमसेसं, कुणंति कम्मक्खयं खिप्पं ॥ ७ ॥ तस्मादस्ति चेन्ममोपरिस्नेहस्तदा कारय त्रिभुवनभवनोदरवर्तिजनमनश्चमत्कारि किमपि जिनभुवनम् । स्थापय तत्र देवदानवमानवमानससमानसराजहंसिकानिभामप्रतिमां भुवनगुरुप्रतिमां ।

ददस्व दानं संसारापारनीरेश्वरोत्तारणकारण—यानपात्रकल्पेभ्योऽनल्पेभ्यो साधुसाधर्मिकेभ्यो । कुरुष्वानुकंपामखिलेष्व-सुमत्सु । यतस्सर्वेऽपि जीवाः सुखाभिलाषिणः एव । अतो हीदं प्राहुः प्राक्तनमहर्षयः । कृपाधर्मनदीतीरे, सर्वे धर्म्मास्तृणा-ङ्कुराः । तस्यां शोषमुपेतायां, कियत्तिष्ठन्ति ते चिरं ? ॥ १ ॥ अपरेप्याहुः । यो दद्यात्कांचनं मेरुं, कृत्स्नां चापि वसुंधरां । एकस्य जीवितं दद्यात्, फलेन न समो भवेत् ॥२॥ हे मातर्मुक्त्वा जिनशासनं नास्ति कोऽपि कस्याऽपि स्वजनः सर्वेऽपि स्वार्थ-वशादेव स्निह्यंति । इत्थं च संबोध्य सारमधुरवचनैः—समागते शुभमुहूर्त्ते संजायमाने च शकुनकलापे संभाष्य सस्नेहं, सबहु-मानं, जननीजनकादिसकलमपि परिकरवृन्दं । बहुकनकरत्नवस्त्रकर्पूरद्राक्षाचंपकहरिचंदनजातिफलादिपदार्थसार्थं संगृह्य बहु-सुभटभटचरटश्रेणिपरिवृता नृपात्तवाहनसप्तशतिसंयुता, सस्नेहं सम्मानिते चार्षभदत्ते भूपतिना सर्वं सज्जितं ज्ञात्वा विहित-प्राञ्जलिपुटा सुदर्शना जनकं स्माह—हे तात ! यन्मयाद्य यावत् किमपि अपराद्धं तत्सर्वं क्षंतव्यं कृपापरेण भवता, हे मात-स्त्वमपि मे आजन्मोपकृतिपरा अतो यत् कदापि दूमितमज्ञया मया ते हृदयं तत्रार्थे क्षंतव्यं नाऽहं क्षमाऽऽयावत्कृतानां त्वदुपकृतीनां प्रत्युपकारकरणे ।

अत्रान्तरे—सुणिऊण तीई वयणं, गलंतनयणंसुसिचवत्थयलो जंपइ राया वच्छे ! पुणो तुमं कत्थ दीसिहिसि ? ॥ १ ॥ तुह दीहविओयजलंतजलण डज्झंतयस्स मह तणुणो । विज्झवणत्थं पुण तुज्झ, दंसणामयरसं कत्तो ? ॥ २ ॥ जणणीइ माणमुग्गर–गरुअपहारा हयव्व सहसावि । विलयंतसव्वगत्ता, धसत्ति धरणीयले पत्ता ॥ ३ ॥

अहो विचित्रोऽयं मोहमहाभटविलासः बलवत्तरोऽयं सुतसुतास्नेहचंद्रहासः सूक्तमुक्तं–केनापि विदुषा तथाहि–गोभद्रः सगरस्तथा दशरथः श्रीमन्नृपः श्रेणिकः, नागाख्यो रथिकः प्रसन्ननृपतिर्धात्रीधरः कोणिकः ! ज्ञानाढ्यो हरिभद्रसूरिमुनिपः सूरिश्च शय्यंभवः, पुत्रप्रेमनि मोहिता भुवितले सद्ज्ञानभाजोऽपि हि ॥ १ ॥ तदा सिक्ता चंदनजलेन, स्पृष्टा च सुखमनिलेन, लब्धचेतना देवीं प्राह शीलवती, सुतन्वि ! नायमवसर एतादृशस्य परिदेवनस्य, यतो हीदानीं तदेव कर्तव्यं येनास्याः कुशलसंततिस्स्यात् दातव्यमाशीर्वचः, स्मर्तव्या इष्टदेवता, कर्तव्याः सुखिनः सर्वेऽपि मार्गणाः विधातव्यं शांतिकपौष्टिकादिकं कार्यं । येन हि विघ्नविनायकोपशान्तिः स्यात् ।

यतो हि—श्रेयांसि बहुविघ्नानि, भवंति महतामपि । अश्रेयसि प्रवृत्तानां, कापि यान्ति विनायकाः ॥ १ ॥ मंगलकार्य्यकरणे च विघ्नाभावः । इत्थं च शीलवत्या संबोधिता सती चंद्रलेखा तुतोष क्षणमवलंब्य धैर्यं, आलिंग्य च गाढतरं प्राह शुद्धशीलरतीं शीलवतीं सादरं, भद्रे ! न्यासोऽयं मे प्राणानां, रक्ष्यणीयेयं स्वजीवितमिव, पालनीया सत्पुरुषवाचेव सर्वदा, भवितव्यं सहायकयाऽस्या निखिलकार्येष्विति ।

तदाच—जगाद शीलवती चंद्रलेखां भगिनि ! अद्य समाप्तोऽयमावयोः स्नेहः, पुनर्दुर्लभो ह्ययं संगमः । इति श्रुत्वा

बभाण म्लानवदना चंद्रलेखा।

वज्जघडियंव पियसहि! मह हियय जं न जाइ सयखंडं। अज्जंवि तुज्झ विओअ—पउरदुक्खं सहेयव्वं ॥१॥ तुम्हम्हदीहविरहग्गि—जालिओक्कुवलयच्छि! नेहदुमो। दुक्खिघणसंजलिओ। अविसंत्तो डज्झइ वराओ ॥ २ ॥ एआरिसं असारं, संसारं मुणेवि दुक्खभंडारं। सारे जिणंदधम्मे, समुज्जया हुज्ज सुयणु! तुमं ॥ ३ ॥

अत्र च शीलवती—सूक्तं भवत्या तथ्यमिदं सर्वं।

तदा च चंद्रलेखा—शीलवति! धन्याऽसि त्वं, कृतपुण्यासि त्वं, ईदृग्गुणाऽऽधारभूतायास्ते कदापि भविष्यति भूयो दर्शनं? भ्रमरोऽयं मे मनः प्राप्स्यति क्वापि कदापि त्वद्गुणसौरभं? प्रियसखि शृणु अवसानोक्तं मे हार्दं—

तथाहि—तत्वं ब्रह्म यथा स्मरंति मुनयो हंसा यथा मानसं, यद्वत्पल्लवसल्लकीवनयुतां ध्यायंति रेवां गजाः। युष्मद्दर्शनलालसामनुदिनं तद्वत्स्मरामो वयं। धन्यः सैव सुवासरः प्रियसखि! यत्रावयोः संगमः ॥ १ ॥

इत्थं च—सुखदसुभाषितैः संभाष्य, देवीं चंद्रलेखां। क्षामयित्वा च सकलमपि नगरलोकं, स्मृतपञ्चपरमेष्ठि नमस्कारा आरुरोह यानपात्रं शीलवती। निजजननीजनकबांधवनागरिकसखिजनं सस्नेहं सप्रमोदं च संभाष्य क्षाम्य चारूढा तस्मिन्नेव प्रवहणे सुदर्शनापि।

तदा च—सा तत्थ सहइ सुहया, सीलवईए समं सुहमईए। पवरविमाणारूढा, लच्छिव्व सरस्सईइसमं ॥ १ ॥ सिट्ठीय उसभदत्तो, नरवइणो चंदलेहदेवीए। विणएण कयपणामो, चढिओ नियए गुरुयपोए ॥ २ ॥ इयपुणरवि पुण दंसण—पणाम-

संजणियजणचमुकारा। रायसुआ भरुअच्छे, सिंहलदीवाउ संचलिआ ॥ २ ॥

तदा च—कालह कंसालक हुड्डकभेरीभंभामृदंगमर्दलपटहादिशब्देषु दिगंतगामिषु। मधुरस्वरतालमूर्छनाभिर्गायत्सु गांधर्वगणेषु, नृत्यन्तीषु सारशृंगारसंगतासु चारुविलासिनीषु। निर्यामकैस्सजत्सु यानपात्रेषु, उद्भियत्सु महत्सु कूपस्तंभेषु, ताड्यमानासु सिढासु, संसार्यमाणासु हरिणीषु, उत्क्षिप्यमाणासु नंगरासु, ऊर्ध्वीकृतासु धवलध्वजासु, गच्छन्ति त्वरया पवनगतिजित्वराणि दक्षिणानिलप्रेरितानि यानपात्राणि कुशलेन।

इत्थं च—गम्यमानेषु यानेषु-संसार इव दुरुत्तारं, दुःसहं, दुरालोकं, दुरधिगमं, दुःखनिधिं, कृतीनां धीराणां सुतरं, कलुषं, कृतजडसङ्गं, अलब्धमध्यं च पिशुनचित्तवत् एतादृशमम्भोनिधिं पश्यति यावत्सुदर्शना तावद्दृष्टस्तत्र विमलनाम शैलराजः, रुद्धानि तत्र प्रवहणानि निर्यामकैरुपदिष्टास्समे सांयात्रिका यथा भो! भो! गृह्णंतु जलेन्धनादिकं यदुपयुज्यते। अत्रान्तरे पृष्टा प्रणतिपूर्वकं राजतनया शीलवती अम्ब! कोऽयं रम्यः शैलराजः? सा जगाद भद्रे! सोऽयं विमल नाम नगाधिराजः यत्र विद्याधरेणापहृत्य मुक्ताहं पूर्वं। इति श्रवणसंजातकुतूहला सुदर्शना प्राह, मातर्यद्येवं तर्हि द्रष्टव्योऽयं प्रदेशः खलु शीघ्रमावाभ्यां।

इत्युक्त्वा शीलवतीसमेता कमलाधात्रीस्कंधदेशनिवेशितदक्षिणहस्ता सुदर्शना सुदर्शनं तं पर्वतं सर्वतो ददर्श।

स च कीदृशः? निज्झरझरंतसलिलप्पवाहझंकारतसियगंधव्वो। गंधव्वविसरमहुर-सरहरियसुरजुवइमणभावो ॥ १ ॥
मणभावुल्लसियपणच्चमाणसुरजुवइरम्मसुपएसो। सुपएसासिणमहोरगंगणागेयरमणीयो ॥ २ ॥

इत्थं च—विद्याधरसुरसिद्धयक्षराक्षसगंधर्वकृतनिवासे शुभाऽऽवासे तस्मिन् कमलायुता बभ्राम यावत् सुदर्शना, तावदेकस्मिन् प्रदेशे कृतस्थितिकमतुलतपस्तेजस्तुलिततरणिकरं, सौम्यसुकांतिभिरधरीकृतशारदनिशीथिनीनाथं, विहिताऽऽशेषकल्मषमाथं निभालयति तत्रैकं मुनिनाथं—

स च कीदृशः? नासग्गनिसियनयणो, उवसग्गपरीसहेहि अक्खोहो। देहेवि निम्ममत्तो, अहरीकयमोहमाहप्पो ॥ १ ॥

दृष्ट्वा च तमुपशांतिनिशान्तं, विदलितभवभ्रांतिं, चिंतयामास चेतसि, धन्याहं ययाऽस्मिन् महाविषमेऽपि शैलशिखरेऽरण्ये कल्पपादप इव दृष्टोऽयं मुनिनाथः, इति विचिंत्य नतोऽनया नयनानंदनो विश्वाभिनंदनो, दत्तोऽनेन धर्मलाभो भणितं स प्रसादं। भद्रे सुदर्शने! जातिस्मरणेन ज्ञातपूर्वभवा भृगुकच्छपुरे मुनिदर्शनार्थं चलितासि? इति श्रवणसंजाताऽप्रमिताल्हादया राजतनयोक्तं भगवन्! तथ्यमेव पूज्यप्रसादीकृतं सर्वं। परंच हे भदन्त! कथं विविधसुखाभोगसंयोगसाधनेऽप्यस्मिन् वयसि स्वीकृतं व्रतं? कुतश्चात्र रत्नाकरे प्राप्ताः। अस्ति यदि मे कथनीयं तदा पाययंतु स्वचरितसुधाऽऽसारया मे कर्णपुटौ अथ च बभाण ज्ञानसंतानविदितविश्ववस्तुवितानः कृतजगज्जंतुजातशातसंतानः क्षमाप्रधानः, भद्रे! सर्वोऽपि प्राणिगणः विषयविषधरकरालदंष्ट्राग्रदष्टवक्षस्थलो विषयविषघूर्णिताङ्गः! पतति प्रतिपदं विषमापत्सु।

तथा च—वेरग्गाओ सुबोहो, हवइ विवेओ सुबोहमइजणओ सुविवेयभावियमई जीवो जिणधम्ममणुसरई ॥ १ ॥ घरवाससंठियाणं, भोगासत्ताण कत्थपरलोओ। इयभाविउण सम्मं, गिण्हंति तवं महासत्ता ॥ २ ॥

इति हि संक्षेपेण विषयविपाको मया कथितः संप्रति विषयाशक्ता यथा दुःखराशिमनुभवंति । तन्निशामय सावधानमनाः, अस्त्यत्र भरतक्षेत्रे विश्वविश्रुता उन्नताऽनेकजिनभवनश्रेणिजितमंदरगर्वा कुणाला नाम महानगरी, तत्र च दुर्वारवैरिवारवारणमृगेन्द्रः स्वजनजनकुमुदचंद्रः समभूत् "आलवमल्ल" नाम भूमिपालः, चंद्रोज्वलशीललीलकृतशोभा, अक्षोभा विपुलनयनहृतकमलश्रीः "कमलश्री" नाम तस्य प्राणप्रिया, प्राक्तनपुण्यप्राग्भारप्राप्तपञ्चेद्रियसुखसागरावगाढयोर्विविधमनोरथरथारूढयोस्तयोः कालक्रमेणैकः पुत्रः समजनि ।

तदा च—संतोषिता मार्गणगणाः, पोषिताः स्वजना जोषितास्सकलजनपदाः,

आहूतो गणकगणः कृता तेन ग्रहावलोकना निवेदितं च राज्ञे—

तद्यथा—जातोयमीदृशे राशौ, कुमारो देव ! सुंदरे । येनास्य संपदस्तुंगा, भविष्यन्ति न संशयः ॥ राशीनां विचारश्चेत्थं प्राह भगवान् सिद्धर्षिः ।

तथाहि—मेषो ( १ ) वृषो ( २ ) मिथुनः ( ३ ) कर्कः ( ४ ) सिंहः ( ५ ) कन्या ( ६ ) तुला ( ७ ) वृश्चिको ( ८ ) धनुः ( ९ ) मकरः ( १० ) कुंभो ( ११ ) मीनः ( १२ ) एतेषाममी गुणाः । चक्षुर्लोलः सदा रोगी, धर्मार्थी कृतनिश्चयः । पृथुजंघः कृतज्ञश्च, विक्रान्तो राजपूजितः ॥ १ ॥ कामिनीहृदयानंद—दायको जलभीरुकः । चण्डकर्मा मृदुश्रान्ते, मेषे जातो भवेन्नरः ॥ २ ॥ अपमृत्युर्भवेत्तस्य, किलाष्टादशवत्सरे । पञ्चविंशतिपर्यंतवर्षे वापि कथंचन ॥ ३ ॥ अष्टस्ताभ्यां पुनर्जीवेच्छतमेकं म्रियेत वा । कृत्तिकाखर्धरात्रेऽसौ चतुर्दश्या च मंगले ॥ ४ ॥ भोगी दाता शुचिर्दक्षः,

स्थूलगंडो महागलः । तेजस्वी रागबहुलः, कंठरोगी सुपुत्रकः ॥ ५ ॥ सविलासगतिः सत्यो, लांछनी स्कन्धगण्डयोः ।
तवं गुणगणोपेतो, वृषे जातो भवेन्नरः ॥ ६ ॥ समानां स शतं जीवेत्पंचविंशतिको यदि । अश्येच्चतुष्पदात्तस्य, मरणं
रोहिणीबुधे ॥ ७ ॥ पुष्टाङ्गो दृष्टिलोलश्च, मैथुनासक्तमानसः । धनाढ्यः करुणोपेतः, कंठरोगी जनप्रियः ॥ ८ ॥ गंधर्व-
नाट्यकुशलः कीर्तिभागी गुणोत्कटः । गौरो दीर्घः पटुर्वाचि मिथुनोद्भूतमानवः ॥ ९ ॥ जले तस्यापऽमृत्युः स्याद्वत्सरे
किल षोडशे । अशीतिको मृयेताऽसौ, पौषमासे जलाऽनले ॥ १० ॥ कार्यसारो धनी शूरो, धर्मिष्ठो गुरुवत्सलः ।
शिरोरोगी महाबुद्धिः कृशाङ्गः कृतवेदकः ॥ ११ ॥ प्रवासशीलः कोपान्धो, बाल्ये दुःखी सुमित्रकः । भृत्यभृत्यो मनाग्वक्रः,
कर्कटोद्भूतमानवः ॥ १२ ॥ पतनेन म्रियेताऽसौ, वर्षाणां विंशतौ नरः । अशीतौ वा पुनः पौषे मृगशीर्षे सिते निशि ॥ १३ ॥
क्षमी मानी क्रियायुक्तो, वत्सलो मद्यमांसयोः । देशभ्रमणशीलश्च, विनीतः शीतभीरुकः ॥ १४ ॥ क्षिप्रकोपी सुपुत्रश्च,
जननीजनकप्रियः । व्यसनी प्रकटो लोके, सिंहे जातो मनुष्यकः ॥ १५ ॥ यश्चाशत्को म्रियेताऽसौ यदिवा शतिको मघौ ।
मघासु जीवितं मुञ्चेत्पुण्यक्षेत्रे शनैश्चरे ॥ १६ ॥ विलासिनीजनाल्हाद–दायको धनपूरितः । दाता दक्षः कविर्वृद्ध-भावे धर्म-
परायणः ॥ १७ ॥ सर्वलोकप्रियो नाट्यगान्धर्वव्यसने रतः । प्रवासशीलः स्त्रीदुःखी, कन्याजातो भवेन्नरः ॥ १८ ॥ त्रिंशत्को
म्रियते शस्त्राज्जलाद्वा यदि वा पुनः । अशीतौ मूलनक्षत्रे, वैशाखे बुधवासरे ॥ १९ ॥ अस्थानरोषणो दुःखी स्फुटभाषी
क्षमान्वितः । चलाक्षश्चललक्ष्मीको, गृहे दर्शितविक्रमः ॥ २० ॥ वाणिज्यदक्षो देवानां, पूजको मित्रवत्सलः । प्रवासी
सुहृदामिष्टस्तुलाजातो भवेन्नरः ॥ २१ ॥ म्रियेत विंशतौ कुड्यपातादिभ्योऽथवा पुनः । अशीतावनुराधासु ज्येष्ठे मंगलवासरे

॥ २२ ॥ बाल्यप्रवासी क्रूरात्मा, शूरः पिङ्गललोचनः। परदाररतो मानी, निष्ठुरः स्वजने जने ॥ २३ ॥ साहसावाप्तलक्ष्मीको, जनन्यामपि दुष्टधीः। धूर्तश्चौरोऽफलारम्भी, वृश्चिकोद्भूतमानवः ॥२४॥ स चेच्चौराहिशस्त्राद्यो म्रियेताष्टादशाब्दकः। पञ्चविंशतिको वाऽपि, ततो जीवति सप्ततिम् ॥ २५ ॥ शूरः सत्यो धिया युक्तः, सात्विको जननन्दनः। शिल्पविज्ञानसंयुक्तो, धनाढ्यो वरभार्यकः ॥ २६ ॥ मानी चारित्रसंपन्नो, ललिताक्षरभाषकः। तेजस्वी स्थूलदेहश्च, कुलघ्नो धनुजातकः ॥ २७ ॥ स चोत्पत्तिदिनाद्यो चेन्म्रियेताष्टादशे दिने। ततो जीवति वर्षाणां, किलासौ सप्तसप्ततिम् ॥ २८ ॥ कुजनेष्टो वशः स्त्रीणां, पण्डितः पारदारिकः। गीतज्ञो लाञ्छनी गुह्ये, पुत्राढ्यो माल्यवत्सलः ॥ २९ ॥ धनी त्यागी सुरूपश्च, शीतालुर्भूरिबान्धवः। परिचिन्तितसौख्यश्च, संजातो मकरे नरः ॥ ३० ॥ म्रियते विंशतौ नो चेत्ततः शूलेन सप्ततौ। शनैश्चरे भाद्रपदे, जीवितं स विमुञ्चति ॥ ३१ ॥ दाताऽलसः कृतघ्नश्च, गजेन्द्रतुरगस्वनः। शाल्मूरकुक्षिनिर्भीको, धनभागी सशङ्किकः ॥ ३२ ॥ स्तब्धदृष्टिश्चलो हस्ते, मानविद्याकृतोद्यमः। पुण्याढ्यः स्नेहहीनश्च, कुम्भे जातो भवेन्नरः ॥ ३३ ॥ स चेदष्टादशे वर्षे, व्याघ्रेण न हतस्ततः। जीवेदशीतिं वर्षाणां, चतुर्भिरधिकां नरः ॥ ३४ ॥ गंभीरचेष्टितः शूरः, पटुवाक्यो नरोत्तमः। कोपप्रज्ञारणश्रेष्ठो न त्यागी बन्धुवत्सलः ॥ ३५ ॥ गांधर्ववेदको नित्यं, सेवकश्चेतरे जने। गच्छति त्वरया मार्गे, मीने जातो मनुष्यकः ॥ ३६ ॥

इत्थं चाभिहिते ज्योतिर्विद्भिः, दत्ते च तेभ्यो जीविताहें महादाने, कृतायां च दिक्संख्याकदिवसस्थितिपतिकायां,

१. दश।

सन्मानिते च स्वजनवर्गे भोजनाऽऽच्छादनैः, प्रवर्तिते च सकलजनपदे आनंदाद्वैते, बंधनमुक्ते च गुप्तिजने, प्रवर्तमाने च शुभमुहूर्ते चकारेलापतिः "विजयकुमार" इति नाम स्वनंदनस्य ॥

इत्याचार्यश्रीमद्विजयानंदसूरिशिष्यश्रीमल्लक्ष्मीविजयोपाध्यायशिष्य-श्रीमद्हर्षविजयशिष्य-प्रवर-सर्वागमसागरपारग-षड्दर्शनप्रवचनप्रवीण-पंडितशिरोऽवतंस-विद्वन्मानसराज-हंस-श्रीमद्विजयवल्लभसूरिचरणचंचरीकेण विजयललितसूरिणा रचिते सुदर्शनाचरित्रे गद्यबन्धे प्रथमः प्रस्तावः समाप्तः ॥

॥ वन्दे श्रीवीरमानन्दम् ॥ वन्दे वल्लभसद्गुरुम् ॥

# ॥ श्रीसुदर्शनाचरित्रम् (गद्यबद्धम्) ॥

## द्वितीयः खण्डः।



संस्कृतानुवादक आचार्यश्रीमद्विजयवल्लभसूरीश्वर-शिष्य आचार्यश्रीमद्विजयललितसूरिः।

मूलग्रन्थकाराः श्रीमद्देवेन्द्रसूरिपुङ्गवाः।

ग्रंथारंभः—स चार्भको जातमात्रोऽपि पुत्राभिलाषिणा अमिततेजोनाम्ना केनचित् विद्याधरेणापहृतः। नीतश्च वैताढ्यान्तर्वर्तिनीं सुरम्यां नाम स्वनगरीम्। विहितं च नाममुद्रानुसारेण विजयकुमार इति तस्याभिधानम्। तं कुमारं पुत्रार्थिन्यै रत्नावलीनाम्न्यै पट्टराज्यै स समर्पयामास। तदनु स्मेरानना सापि तमर्भकमुपलभ्य, संजातामितहर्षा तं बालं स्वात्मजं जननीवापीपलत् महता स्नेहेन पुत्रत्वेन वर्धयामास। यतो हि भण्यते विद्वद्भिः—" शीतलं चंदनं लोके चंदनादपि चंद्रमाः। चंद्रचंदनतश्चापि शीतलः पुत्रसङ्गमः ॥" कलाग्रहणयोग्यं तं बालकं विलोक्य भूपालोऽपि विद्याध्ययनार्थं कलाचार्याय समर्पयामास। पूर्वपुण्यप्रभावेणासौ कुमारः शीघ्रमेव सकलकलाकलापज्ञो भूत्वा केषां मनांसि नो चमच्चकार?। यतो विपुलविशदधि-

षणाशालिनां तादृशानां महानुभावानां जन्मान्तरोपार्जितान्येव पुण्यानि सर्वत्र कारणानि भवन्ति, गुरवस्तु साक्षिमात्रभूता भवन्ति। व्यपगतमल आदर्शे प्रतिफलितरम्यचित्राणीव। अथ क्रमेण प्राप्ततारुण्यसौभाग्यो विजयकुमारो यथेच्छं यथा यथा रमते तथा तथा तादृशं तं कुमारं वीक्ष्य रत्नावली स्वान्तःकरणे विविधान् मनोविकारानकल्पयत्।

उक्तञ्च—" चारित्ररक्षणविधावमितप्रभावमन्यावलां स्वजननीमिव मन्यमानम्। एकान्तगं सुवपुषं तनयं युवानं किं वीक्ष्य दुष्टमतयो न भवंति नार्यः ?॥" यतो विचित्रा कर्मणां गतिर्भवति। अतश्चैकदा प्रत्यग्रसौभाग्यसम्पन्नं, लावण्यामृतपरिपूर्णं, प्रतिपन्नपुण्यतारुण्यं, तं कुमारं साक्षात् मारमिव विभाव्य सा रत्नावली तद्रागवशंगताऽभूत्। अथ च तं मोहपाशे क्षेप्तुं विविधानुपायानचिन्तयत्। तथाहि–कुलस्य मलीमसत्वेन किम्? शीलस्यानिर्मलत्वेन वा, अथवा निजपतिं प्रति विनयेषु अप्रवीणत्वेन, आहोस्वित् दुर्गतिं प्रति जिगमिषया, अविवेकभूमिमुपगतत्वेन च विकारेषु अत्यासक्त्या अनाचारं चरन्ति वामलोचनाः। एकदा रहसि स्थितं तं कुमारं विलोक्य सा रत्नावली तस्मै स्वकीयं सर्वं मनोविकारं निवेदयामास।

यदुक्तं—" रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद! नारीणां सतीत्वमुपजायते॥"

भो विचक्षणावतंस! सत्पुरुषमौलिचूडामणे! शृणोतु भवान् सावहितेन मनसा मद्वचनम्।

यद्यप्यहं सुवाङ्माधुरीं गिरं वक्तुं न वेद्मि तथापि सद्भावमेदुरतया हितकाम्यया सुपरिणामिधिया ते ब्रवीमि। आत्महितमाचरता जनेन मनागपि लोकापवादान्न भेतव्यम्। किन्तु असारतोऽपि सारो गृहीतव्य इति। सौजन्यपुण्यान्विता दाक्षिण्यमहोदधयो महानुभावाः स्वभावत एव परोपकारिणो भवन्ति। सम्प्रति त्रिभुवनशेखरीभूतेयं सुरम्या नाम नगरी इति

सर्वे जना जानन्ति। नन्दनवने स्नेहेनाभिषिच्यमान–देवद्रोरिव अत्र स्थितस्य भवतो यथा सौराज्यं सुखसंपत्तिः स्यात्तथाहं वच्मि, प्रेमपीयूषपूर्णं हितकरं मद्वचनं सावधानेन मनसा शृणु, अन्ते शुभोदर्कश्च तव भविष्यति। रोगनिर्मुक्तशरीरमेवास्य जन्मनो मुख्यं फलं, वित्तस्य तु भोगोपभोगौ दानं च, जगति सारतोऽपि सारतरमिदं कमनीयं वपुः प्रियसंगमेनैव सफलयन्ति विचक्षणा जनाः। अत्रार्थे यत् सारमस्ति तदहं वक्ष्यामि–जितमार हे कुमार! नाहं ते जननी, न च त्वं मे तनुजन्मा, तस्मान्मयि मातृभावं मुञ्च, शृणु स्वकीयं समाचारम्। तथाहि–अस्यामवनौ निखिलनगरीषु शेखरायमाणा कुणालाभिधा काचिन्नगरी वरीवर्ति। तस्यां खलु आहवमल्लाभिधो भूवरो नरपतिर्वसति। तस्य कमलश्रीनाम पट्टमहिषी सकलललनाललामभूता, तस्या एव त्वं नयनानन्दकरो नन्दनोऽसि, तयैव त्वं प्रसूत इति सर्वमुदन्तजातं तस्मै निवेदयामास। अत्र तु पुत्रार्थिना मत्पतिना त्वमानीतो मया वर्धितश्चेति। अतो हे सुभग! सौभाग्यशिरोमणे! रतिकोविद! अनङ्गानलसंतप्तशरीराऽहं भवत्संगमेनैवात्मानं सफलीकर्तुमिच्छामि। ममेच्छां पूरय इति भवन्तं पुनः पुनः प्रार्थयामि। तदनु प्रसन्नाऽहं सर्वा अपि स्वविद्याः तुभ्यं दास्यामि। अस्मिन् विषये मनागपि संदेहो न विधेयो भवता। ततश्च विद्यानिधानभूतो भवान् अस्याः सुरम्याया राज्यं नानाविधं वैषयिकं सुखश्चानवरतमावामनुभवावः। एवं श्रुतिशल्यकल्पमश्रुतपूर्वं तदीयं वचनमाकर्ण्य विजयकुमारः क्रोधानलसंतप्तो मनसीत्थमचिन्तयत्।

यदि भवति समुद्रः सिन्धुतोयेन तृप्तो, यदि कथमपि वह्निः काष्ठसंदाहतश्च।
अयमपि विषयेभ्यः प्राणिवर्गस्तदा स्यादिति मनसि विदन्तो मा न्यधुस्तत्र रागम्॥ १॥

इत्यादि मनसि विभावयन् 'असारतोऽपि सारो निःसारणीयः' इति तदीयामेव भणितिमनुश्रित्य ओमिति प्रतिपद्य, "पूर्वं मह्यं विद्यां देहि पश्चाद् यथोचितं विधास्ये" इति तामाह कुमारः। ततश्च सा प्रसन्नमनास्तस्मै कुमाराय गगनगमन-आत्मसंवरणादिकाः सर्वा अपि स्वकीया विद्या अर्पयामास। तदनु विजयकुमारोऽपि सद्भावगर्भितं वचनं प्राह-हे अम्ब! एतावत्कालपर्यन्तं मया त्वं जननी जननी इति भाषिता, त्वयाऽपि चाहं सुतोचितलालनादिलालितः पालितः संवर्धितः, अतो विपरीतभावं गन्तुं मे मनः शङ्कते—

"न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव प्रत्युत परिवर्धते ॥"

अण्णं च तुह पसाएण, जं मए जाणियाउ विज्जाओ। ता अज्जदिणाउ तुमं, विसेसओ मह गुरुट्ठाणं ॥ १ ॥
ता एयं दुच्चरियं अम्मो! दुव्ववसियं असब्भावं। जाव न जाणइ ताओ ता विरमसु एयपावाओ ॥ २ ॥
नाऊण निच्छयं तस्स तीइ रोसेण जंपियं सहसा। कामासत्तो जइ वि हु मा पत्थह मह तुमं पुत्तो ॥ ३ ॥
अहवा न तुज्झ दोसो रक्खइ सीलं कुलं चिय नराणं। अकुलीणो को वि तुमं सच्चमजाया कहं पुत्ता? ॥ ४ ॥
तव्वयणजणियगुरुकोउएण कुमरेण चिंतियं महिला। कामासत्ता कवडेण नत्थि तं खलु न जं कुणइ ॥ ५ ॥
हारेइ धणं मारेइ नियपियं अहिलसेइ पुत्तं पि। भक्खेइ अभक्खं पि हु मइलिय[1]चित्ता सया महिला ॥ ६ ॥

अपि च—अनृतं साहसं माया मूर्खत्वमतिलोभता। अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥

---

१ मइलिय० मलिनित।

किमिदं तातय निवेदयामि ? नैतद् योग्यं प्रतिभाति यतोऽश्रद्धेयमिदं वचनं तातोऽपि नैव प्रत्येष्यति। यतो हि वामभ्रुवां विलासगर्भपूरितानि मनोहराणि वचांसि सर्वैरपि प्रतीयन्ते। अपि चैवंविधे समये यदि चात्र तिष्ठामि, तर्हि अवश्यमेव तातेन समं विरोधो भविष्यति। यदि तूर्णीभूयान्यत्र गच्छामि तदा चास्याः सर्वा भणितिः सत्या भवित्री।

अहो !, किं करोमि ? क्व गच्छामि ? कस्याग्रे वच्मि विभो !, पतितोऽहं महाकष्टे तटिनी-व्याघ्र-संकटे ॥ १ ॥

अपभ्रंश-सो को वि नत्थि सयणो जस्स कहिज्जन्ति हिययवत्ताइं। आवन्ति जंति कण्ठे पुणो वि तत्थेव तत्थेव ॥ २ ॥

अस्तु, यद् भाव्यं तद् भवतु, किन्तु धर्मार्थकामानां प्रत्यर्थीभूतः सर्वाभ्युदयदावानलतुल्यः संपूर्णदोषाकरो, विरोधस्तु जनकेन समं सदैव परिहरणीयः। इयञ्च नीचैर्गामिनी निम्नगेव, राक्षसीव मायास्वरूपिणी, कपटकूटमापिणी, साक्षादनयविधेव वक्राशया, फूत्कुर्वाणाऽभिनवविषमुद्गिरन्ती व्यालीव त्यक्तकुलाङ्गनाजनोचितस्वभावा हिताभिलाषिणा मया इदानीमेव मोक्तव्येति निश्चयं चकार। अत्रार्थे कोऽपि विद्वन्मूर्धन्यो व्याजहार—

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया। उपानद्-मुखभङ्गो वा दूरतो वाऽपसर्पणम् ॥

इति सर्वं मनसि विभावयन् विद्याविज्ञानोपलब्धप्रभूतप्रतापो विजयश्रैकामेवासिलतामादाय नभोगमनविद्यया समुत्पपात। नानाजातीयवनखण्डपर्वतालीसरितासमुद्रग्रामनगरतपोवनाकीर्णामिमां पृथ्वीं विलोकयन् अनेकेषु जलपूर्णेषु सहस्रनानाविहंगमकूजितं मनोहरं श्रावं श्रावं क्षणमात्रेण कुणालां नगरीमाजगाम। किं दूरं व्यवसायिनाम् ?।

स च तत्र उद्यद् द्वितीयसूर्य इव भासुरः केषां मनांसि नाकृष्टयामास ? क्षामं क्षामं दुःखदावानलसंतप्ताभिनवलतामिव म्लान-

मुखसरोरुहां, अंतस्संतापेन विहितगल्लहस्तां, शोकसागरनिविष्टां, स्वमनसि किंचिदगोचरं ध्यायन्तीं स्वमातरं ददर्श ।

साऽपि भूमिपतितं तेजःपुञ्जमिव तं दृष्ट्वा प्रफुल्लहृदया पुनः पुनः तमवलोकयन्ती स्नेहगद्गदया गिरा तं साश्चर्यं सानन्दं पप्रच्छ 'भद्र ! कोऽसि त्वं ? कं भूमिभागं पवित्रयन् अत्रागतोऽसि ? । कस्य वा भाग्यतः सुतरत्नमसि ? कयाऽखण्ड-सौभाग्यशेखरया जनन्या प्रसूतोऽसि ? । किं वा कारणजातमालम्ब्यात्रागमनं ते ? कथय, विनिवारय मम हृदयगुहागतं संशयतिमिरम्' इति कथयंत्या मातुश्चरणयोः प्रणतिं विधाय विजयो मधुरया वाचा बभाण । सुतवत्सले ! मातः ! अहं तव पुत्रोऽस्मि, तवांगजोऽस्मि, तव नेत्रानन्दकरोऽस्मि । जातमात्रोऽप्यहं केनचित् विद्याधरेण अपहृतोऽतस्त्वं मां न उपलक्ष्यसि ।

इति श्रुत्वा कमलश्रीर्हर्षपूरितमानसा उद्गतरोमकूपा हर्षाद्वैतमूर्तिः पुलकिताङ्गी सुखसागरनिमग्ना तं स्वकीयं पुत्रं स्नेहेन भूरि भूरि सस्वजे । तन्मस्तकं स्वोत्संगे निधाय भूरि भूरि चुचुम्ब । हर्षपूरितया दृष्ट्या पुनः पुनः तं विलोकयन्ती स्वकीयं भाग्यं प्रशशंस। हर्षोद्भवैर्नेत्राम्बुभिस्तं सिषिञ्च । ज्ञाततद्वृत्तांतस्तज्जनकोऽपि हर्षोद्ग्रथित इव अपारं स्नेहभारं मनसि उद्वहन् स्नेहपरवशः त्वरितं त्वरितं तत्राजगाम । दृष्ट्वा च तं देवकुमाराभं स्वतनयं सस्नेहं सतृष्णं पुनः पुनरालिलिङ्ग ।

अथ चान्येऽपि सर्वे च देवेन्द्रभवनोपमभवनं विनिवेश्य जितमारं विजयकुमारमखिलमितिवृत्तं पप्रच्छ । सोऽपि यथा-जातं स्ववृत्तांतं निःसंकोचं पितृप्रभृतिभ्यः कथयामास। सर्वैरपि तदुक्तमाकूतं हर्षपीयूषमिव श्रोत्रपुटेन तथा पीतम्, यथा पुनः पुनः श्रवणेऽपि अतृप्ता इवाभवन् । अमन्दानन्दसंदोहजनकं तद्-वृत्तान्तं प्रोत्फुल्लमना भूजानिर्यावच्छृणोति तावदेव कोऽपि संदेहहरो दूतः समाययौ । स च विनयेन राजानं प्रणम्य प्रोवाच । शृण्वन्तु सावधानेन मनसा महानुभावाः ।

यत्खलु–अयोध्यानगरीनाथेन जयवर्मणा नृपेण भवन्तः केनापि कार्यविशेषेण समाहूतास्ताञ्च नगरीं पादार्पणेन पावयन्तु इति उक्त्वा स दूतो विरराम। तस्य दूतस्य वचनं श्रुत्वा विजयकुमारो जनकं पप्रच्छ। पूज्यपादाः! किमस्माकमपि कोऽपि स्वाम्यस्ति? यस्य परिचर्या विधेया भवति? ततो राज्ञाऽसौ कुमारः प्रोचे–सौम्य! असौ नराधिपः क्रमागतप्रभुत्वेन, साधर्मिकत्वेन, चास्माकं परमस्नेहपात्रं मित्रमस्ति। अतस्तत्र अस्माभिर्गन्तव्यम्। त्वं तु भूयसा कालेन समागतोऽसि, अतो निजमातुर्मुदमावहन् सुखेनात्रैव तिष्ठ। ततश्चेत्थं पितुर्वचनमाकर्ण्य बद्धाञ्जलिः कुमारः सविनयमर्यादं मनोहरं वचनं जनकं प्रत्याह।

तातपाद! यद्येवमस्ति, तर्हि भवदादेशेनाहं तत्र गन्तुमिच्छामि। यदि भवते रोचते तर्हि मामाज्ञापयतु इति कुमारोऽब्रवीत्। ततश्च पित्राऽऽज्ञप्तः कुमारश्चतुरङ्गसैन्यपरिवृतो नभसि निशाधिनाथ इवानवरतप्रयाणेन शीघ्रमेवायोध्यापुरीमाससाद। ततश्च तत्परिसरावनौ निजकटकं संस्थाप्य चाप्तैर्निजभटैः परिवृतो नृपान्तिकमाजगाम। तत्र सभायां विराजमानं राजानं विनयेन प्रणम्य तेन प्राप्तादरः कुमारः सदसि प्रातिष्ठत। ततश्च विज्ञातसकलकलाकलापस्य लावण्यरूपरत्नरत्नाकरस्य कुमारस्य स्वच्छे तोये तैलबिन्दुरिव सर्वत्र कीर्त्तिः प्रससार।

तस्मिन्नेव समये जयवर्मभूपतेः शीलवती नाम दारिका वयस्याभिः परिवृता तातस्य चरणसरोरुहं नन्तुं तत्रागतवती। तातस्य चरणवन्दनं कृत्वा स्वपितुः पार्श्वे स्थितं साक्षान्मारमिव तं राजकुमारं विलोक्य सखीजनैर्विहस्यमाना पितुर्लज्जमानापि कुमारं प्रति अनङ्गशरानिव कटाक्षान् क्षिपन्ती शनैः शनैः सदसो निर्जगाम, जगाम च निजभवनम्। नृपोऽपि तस्याश्चेष्टाविशेषैः कुमारं प्रति तस्या मनोगतं भावं विज्ञाय शुभे समये महता महता सम्भारेण तस्मै निजतनयामदात्। ततश्च प्रारब्धो

राजवर्गेण विवाहोत्सवः, पूजिताः स्वेष्टदेवताः, सम्मानिता गुरवः, संतोषितो भृत्यवर्गः, शृंगारितं नगरम्, उत्तंभिता ध्वजाः, प्रलंबिता महत्यः पताकाः, वितीर्णानीच्छाधिकानि दानानि, कृतानि मंगलानि, विहितानि कौतुकानि, समुपनीतानि सतीर्थोदकानि, वादितानि वादित्राणि। विजयकुमारोऽपि–"ततः समस्तेनापि जनसमुदायेन सहितः, विलिप्तः सरसचंदनेन, गुंठितः कर्पूररेणुना, मालितः सुरभिपाटलादामभिर्विराजितो मल्लिकाकुसुमस्तबकैरालिङ्गितः स्थूलमुक्ताफलकलापेन, निवसितः सूक्ष्मकोमलवसनैः"। इतश्च–तस्मिन्नेव समये परिजनपरिवृतो नृपो वसन्तसुखमनुभवितुं पुष्पकरण्डकोद्याने जगाम। तत्र वासन्तिककुसुमसुरभितोद्याने वयस्यैः सह यावदनेकाभिः क्रीडाभिः क्रीडति विकसितपद्ममकरन्दरंजितासु दीर्घिकासु निमज्जनोन्मज्जनं करोति। वसन्तश्रीजनितारामश्रियश्च पश्यति, दोगुन्दकदेव इव सुखातिशयमनुभवति। तावदेव धृतकुमारस्वरूपेण केनापि विद्याधरेण सा नृपपुत्री शीलवती अपहृता। तत्पश्चाद् विद्याधरेणापह्रियमाणा सा राजपुत्री कुमाररूपधारिणमात्मानं हरन्तं तं खेचरं प्राह। हे प्राणाधिनाथ! सर्वेषां पश्यतां पुरतो यदहं चापहृता तन्न शोभनमनुष्ठितं भवता। अतो मां भृशं व्रीडा बाधते। मयि दयां कुरु, शीघ्रं मुञ्च, येनाहं स्वकीयस्थाने गच्छामि इति तया पुनः पुनर्भणितम्। इत्थं विनयपूर्णं तदीयं वचनं श्रुत्वा तांश्च पुत्रीं तत्रानवलोक्य पुरो विद्यमानं द्वितीयं कुमारं विलोक्य सर्वे जना विशंकितमनसोऽभूवन्। तस्मिन्नेव समये तस्याः सखीजनैः परिजनैश्च सममेवोच्चैः पूत्कृतम्। भो जनाधिनाथ! भो नृदेव! त्वर्यताम् त्वर्यताम्। केनापि दुर्जनेनापह्रियमाणा अस्मत्–प्राणधारिणी इयं शीलवती रक्ष्यताम् रक्ष्यताम् इति तासामतितारध्वनिं श्रुत्वा नृपः शीघ्रमेव स्फुरत्सौदामिनीमिवासिलतामादाय तस्यानुचङ्क्रमणमकरोत्। परन्त्वलक्ष्ये तस्मिन् किमपि प्रतिकारं कर्तुं न शशाक।

गृहीतनानाप्रहरणाः सज्जीभूताः तस्य भटाश्चित्रिता इव बभूवुः। कुलिशपातसमाने घोरसंकटे समागते चास्मिन् दुःखार्णवे पतिताः किंकर्त्तव्यविमूढाः सर्वे किमपि कर्तुं नाशक्नुवन्। ततश्च प्रबलपवनोद्वेलितोदधिकल्लोला इव असौ करुणाक्रन्दः सर्वतः प्रससार। हे भद्रे! सुदर्शने! चैतादृशोऽसारोऽयं संसारः सर्वेषां दुःखानां निधानम्, सामान्यमनुष्याणामपि जुगुप्साकरं किं पुनर्विदुषामिति हेतोर्हितेच्छुभिः पुरुषैः सर्वथा परिहरणीयः।

केऽपि महानुभावा लघुकर्माणः संसारतीरवर्तिनः "गाढतरमभ्यस्ततया कुशलभावस्य, प्रहीणतया कर्मजालस्य, विशुद्धतया ज्ञानस्य, हेयतया विषयाणां, उपादेयतया प्रशमस्य, अविद्यमानतया दुश्चरितानां, प्रबलतया जीववीर्यस्य, प्रत्यासन्नतया परमपदसम्पत्तेर्न बहुमन्यन्ते राज्यश्रियं, न कुर्वते शरीरसंस्कारं, न ललंति विचित्रलीलाभिः।"

अथ च विक्रमाक्रान्तोऽप्यसौ भूपः भूमिचरत्वेन खेचरस्य प्रतिक्रियां कर्तुं न प्रबभूव। किं बहुना? महान्तोऽपि जनाः कन्यानिमित्तमनेकानि दुःखानि प्राप्नुवन्ति।

उक्तञ्च—कन्याराशिगतः सूर्यः शक्तिहीनः प्रजायते। "जातेति चिन्ता महतीति चिन्ता, कस्मै प्रदेयेति महान् वितर्कः। दत्ता सुखं प्राप्स्यति वा नवेति, कन्यापितृत्वं खलु नाम कष्टम्॥" एवं च धातुवादरसायनप्रयोगवशीकरण–खनिग्रहण-प्रयोगैः महान्तोऽपि जना महतीमापदं प्राप्नुवन्ति। अथवा किमनेन? धर्मस्यैव सर्वत्र विजयो भवति इति सर्वैः स्वीकृतम्। अस्माभिस्तु धर्मसंगतं धार्मिकं वचनं कुलदेवी गुरुदेववचनं च नाङ्गीकृतमतोऽस्मिन् महोत्सवे चायं कुलिशपातो जात इति सर्वैरूचे। ततश्च नृपः सुचिरं विमृश्य तं राजकुमारं प्राह–भद्र! सर्वशक्तिसमन्वितं विद्यानिधानं त्वां वयं सर्वे जानीमः।

अतश्चास्मिन् समये भवता विलम्बो न विधातव्योऽनुक्तमप्यूहति पण्डितो जनः। इत्थं नृपेणासौ कुमारः सम्मानपूर्वकमुक्तः। तदनु विनयेन विहिताञ्जलिः कुमारस्तस्य पुरः प्रतिज्ञामकरोत्। हे नृदेव! यदि पञ्चदिनानन्तरं भवत्पुत्रीं नानेष्यामि, ततः परमवश्यमेव प्रव्रज्यां गृहीष्यामि इत्युक्त्वा खड्गहस्तः कुमारस्तस्य प्रतिकर्तुं विद्याधरपृष्ठे नभस्युत्पपात। ततश्च पराङ्गनामलिम्लुचोऽसौ विद्याधरश्चास्मिन्नेव विमलगिरौ कुमारेण विलोकितः। ततश्च रोषारुणलोचनेन दष्टाधरेण परुषवचनेनासौ दुरात्मा हक्कितः। हे दुरात्मन्! तिष्ठ तिष्ठ नरेन्द्रकन्यापहारकस्य ते त्रिभुवनेऽपि किमपि स्थानं नास्ति, यत्र त्वमात्मानं गोपयिष्यसि। अद्यावधि त्वया मद्बलं न ज्ञातम्, यदि त्वमात्मनः शिवमिच्छसि तर्हि शीघ्रमेव नृपतनयां मुञ्च। स च खेचरः पादाहतफणीन्द्र इव दुरुक्तैस्तद्वचनैः संजातगुरुमत्सरस्तीव्रक्रोधानलसंतप्तो वज्रसारमयं स्वकीयं चक्रं कुमारं प्रति प्राहिणोत्। विद्याबलसंपन्नो विजयकुमारो द्वितीयं पतङ्गमिवाभिमुखमायात् तच्चक्रं विस्फुरत्किरणकलापेन चन्द्रहासेन वञ्चयित्वा तस्य शिरःस्थं देदीप्यमानं मुकुटं नीचैः पातयामास। ततश्च सत्त्वातिसारं तं कुमारं ज्ञात्वा तां तरुणीं तत्रैव विमुच्य व्रीडितः सन् किष्किन्धाभिधे पर्वते प्रत्याजगाम। कुमारोऽपि तत्पृष्ठमनुधावन् स यावत् सुरम्यां निजपुरीमाजगाम तावत्स कुमारोऽपि तमनुव्रजन् तत्रैवाययौ। तस्यामेव सुरम्यायां तस्मिन्नेव निजभवने तं विलोकयामास। तत्र धृतनिजस्वरूपं तं खेचरं सम्यग् विज्ञाय मनसि व्यचिन्तयत्। अहो मदीयोऽयं तातः, सैवेयं मदीया जननी, सुरम्यं तदेव मदीयं भवनम्, अयुक्तं मयाऽऽचरितम्, यत् ताताय प्रहारो दत्त इति पश्चात्तापमवाप। किं बहुना? अनेनाहं पुत्रवल्लालितः पालितः पाठितो वर्धितश्चास्मिन् गुरुवद् वर्तितव्यं, शत्रुवन्मयाऽऽचरितमित्येवं शोकार्णवे निमज्जमानस्तातं क्षमापयामास। तथाविधं तं कुमारं विलोक्य खेचरः प्राह—

कार्यार्थं जनकेनापि समं योद्धव्यमेव नीतिसारोऽयं निरूपितः। अपि च भवता स्वरूपपरावर्तनेन चाहं नोपलक्षितः। त्वयाऽहं पराजितः। अन्यच्च मामज्ञाप्यैव त्वमितो निर्गतोऽतस्तव प्रसादनकृते चाहं त्वामन्वगच्छम्। क्रमशः तस्मिन्नुद्याने रतिद्वितीयामिव तां नृपदारिकां विलोक्य गुरुणा तदनुरागेणाकृष्टचित्तोऽहं मोहमुपागतः। ततो विहितत्वद्रूपेण मया सा नृपपुत्री हृता। तथापि भुवनैकवीरेण त्वया पराजितश्चात्राजगाम। यद्यपि व्रीडाकरं समाचारं त्वं नैवाब्रवीस्तथापि मदीया अनुचराः सर्वं मह्यं निवेदितवन्तः। अस्मिन् विषये किमपि त्वद्दूषणं नास्ति। इयं हि धूर्ततासारा कारणैः प्रविभाव्यते।

"कपोल-सूचितं हास्यं, सुलज्जं मृदु भाषितं। भवतीह कुलस्त्रीणां निर्विकारं निरीक्षितम्॥ १॥
वारीणामिव नारीणां प्रायेण विषमा गतिः। नैव कैरपि विज्ञाता प्राक्तनैर्विबुधैरपि॥ २॥"

ततश्चेदानीं संपद्यमानेनानिष्टसंयोगेन इष्टजनवियोगेन च मम मरणमेव शरणमित्येव मया निश्चितम्।

अपि च—"जाइकुलविणयसुयसीलचरणसम्मत्तवित्तदेहाइं। महिलाआसत्तमणो हारेइ नरो खणद्धेणं॥ १॥
भरिया वि सिणेहेणं सकज्जलज्जासिणेहखयकारी। दीवसिह व सकलुसा मलिणकरी चयह खलु महिला॥ २॥
जलसंगया दुरंता दोपक्खखयंकरी दुरायारा। सरिय व्व विसमपहनीयगामिणी महिलिया चयह॥ ३॥
पयपूरिया वि सविसा चरणविहीणा वि गूढपयचारा। कुडिलगई दुस्सीला दुजीहसप्पि व्व चय महिला॥ ४॥"

तच्छ्रुत्वा कुमारोऽब्रवीत्—तात! यद्येवमस्ति ततश्चेदृशे संसारे मयापि न स्थातव्यम्। वामलोचनानां मधुसंपृक्तविषोपममन्याय्यस्वरूपं जानन्नपि यो जनश्चास्मिन् संसारे रागं करोति, स सदैव स्वकीयं सर्वस्वं हारयति; वडिशेऽत्यासक्तशफरी इव।

"अन्यच्चेदमधुना पर्यालोच्यं भवता सार्धं मया यदुत–विरक्तं तावत् किमपि भवचारकवासाच्चित्तं, गृहीता दुःखात्मतया विषयाः। भावितो लोकोत्तरतरामृतास्रावतया प्रशमः। न स्थातव्यमधुना गृहपिंजरे, गृहीतव्या भागवती दीक्षा।"

इति युक्तियुक्तं वैराग्यभावनाभावितं पुत्रवचनं श्रुत्वा असौ विद्याधरो विपुलं विभवं प्रभूतैश्वर्यसमन्वितं राज्यं सर्पनिर्मोकमिव विमुच्य सुगुरुपादमूले यतिधर्मं प्रतिपद्य भूमिपीठे विजहार। इतः कुमारोऽपि सेयं नृपपुत्री तत्पित्रे समर्पणीया इति विचिन्त्य तस्मिन्नेव भूधरे भूयः समाजगाम। किन्तु तत्र तामनवलोक्य महति चिन्तासागरे निर्ममज्ज।

पश्चात् तेनेत्थं मीमांसितम्–'अहो! अस्याः कृते मया बहूनि कष्टानि सोढानि, तातेनापि समं तुमुलं युद्धमकारि। स्वप्रतिज्ञाऽपि विफलीकृता, तथापि सा राजपुत्री नैवाप्ता, भ्रष्टप्रतिज्ञस्य मे सुभटत्वेन किम्? मम भुजयोर्बलमपि नैव विद्यते, वाचि मधुरभाषिताऽपि नास्ति, न वा काव्यशक्तिः, संशयच्छेदनपटीयो विद्वत्त्वमपि नो वरिवर्ति। अतश्चाहं स्वकृतेनैव कर्मणा विलज्जितोऽस्मि। इत्थं स्वमनसि विभावयन् कुमारो जिनचरणाराध्यमयं चारित्रं जग्राह। यतो हि विपदनलसंतप्ता जनाः कथमपि स्वार्थं न भ्रंशयन्ति। कनककामिनीकलापं विमुच्य शिवशान्तिदायकं चारित्रमभ्युपेत्य शरीरेऽपि विगतस्पृहो विविधानभिग्रहानपालयत्। स्वीकृतैकाकिविहारप्रतिमः संप्राप्तावधिज्ञानो निखिलभूवलयं विहरन्नत्राजगाम; सोऽहं विजयकुमारपूर्वाभिधानो मुनिः' इति। तत्र च जिनधर्ममुपदिशन्तं तं मुनिं विलोक्य धात्री सुदर्शना च प्रभुमर्चयन्तीं शीलवतीं वर्धापयामासतुः। भो भोः! स तव प्राणवल्लभो विजयकुमारो गृहीतदीक्षश्चोग्रं तपश्चरन् भव्यान् प्रतिबोधयन्नत्रैव तिष्ठति। द्रुतमेहि, तं मुनिं विलोक्य स्वलोचने सफले कुरु इति तामाजुहवतुः।

तद्वचनश्रवणमात्रेणोत्पन्नप्रभूतसंदेहा सा शीलवती द्रुतमेव तस्य मुनेरभिमुखमाजगाम। महत्या भक्त्या तं मुनिं ववन्दे। मुनिरपि तस्यै धर्मलाभं दत्त्वाऽऽचचक्षे। भो सतीमतल्लिके! सुश्राविके! भवती एव मम संयमस्य कारणीभूतेति व्याहृत्य तूष्णींभूते मुनौ सा हस्तौ संयोज्य महता विनयेन व्याजहार–"भो मुनीश्वरा! भवन्तः स्वत एव लघुकर्माणः संसारार्णवं स्वत एव तरणतारणक्षमाः, भवतां मया न किमप्युपकृतम्, किन्तु मत्कृते भवता बहवो विघ्ना अनुभूतास्ते क्षन्तव्याः पूज्यपादैः" इति तं मुनिं कथयित्वा क्षमयामास। ततश्च सुदर्शना प्राह–भगवन्! येन भवांतरे कष्टं न स्यात्, तदुपदिश्यताम्। तत्पश्चान्मुनिरब्रवीत्। हे सुशीले! यदि तवेहा चेदृशी विद्यते, तदा सर्वदुरितदलनक्षमं जिनधर्माराधनं कुरु। स च धर्मस्तीर्थप्रवर्तकैर्जिनैश्चतुर्विधः प्रोक्तः। दानं शीलं तपो भावना चेति। तत्र ज्ञानप्रदानेन जनः केवलज्ञानं प्राप्नोति, तदाराधनेन अनङ्गदत्त इव शिवमपि समासादयति। तथा च तद्वृत्तान्तः—

अस्मिन् विषये पुरातनं वृत्तान्तं कथयामि, सावधानेन मनसा भवती शृणोतु। अस्मिन् भरतक्षेत्रे मगधदेशोऽस्ति। तत्र बहुलक्ष्मीसनाथं राजगृहं नाम नगरं विद्यते। तस्याधिपो जयचन्द्रो नाम नृपतिर्बभूव। तस्य च कमलावती नाम प्रियाऽऽसीत्। तयोश्च विजयचन्द्र–चन्द्रसेननामानौ परस्परमत्सरिणौ द्वौ पुत्रौ बभूवतुः। एकस्मिन् समये जयचन्द्रस्य सामन्तः सबलो नाम भूपतिर्बहुसैन्यसमेतः सर्वतस्तस्य पुरमारुरोध। तन्निरीक्ष्य जयचन्द्रश्चतुरङ्गसैन्यपरिवृतस्तं विजेतुं चचाल। तदा रणे व्रजन्तं निजपितरं विजयचन्द्रो निवार्य आत्मानं वीरं मन्यमानस्तत्राजगाम। सर्वलोकभयप्रदे रणे प्रवृत्ते सति पौरुषाधिक्येन सबलेन नृपेण शीघ्रमेव विजयचन्द्रः पराजितः।

तदनु भ्रातुः पराभवेनातीव जातमत्सरश्चन्द्रसेनो जनकमापृच्छ्य निजबलभरेण मेदिनीं नमयन् क्रोधारुणितलोचनो हुताशन इव तं प्रत्यभिससार। तथाविधं तमायान्तं विजयचन्द्रमिव तमपि मन्यमानः सोऽपि रोद्धुमाययौ। नानानाराचदुर्दिनं तयोर्जन्यमभूत्। प्रबलप्रतापेन भुजबलिना चन्द्रसेनेन शीघ्रमेव स पराजितः। निगडेन तं निबध्य पितुरन्तिकमानयामास। तेन कार्येण परितुष्टो जयचन्द्रस्तं बहुधा संमान्य महता समारोहेण तस्मै युवराजपदं ददौ। ततश्च तेनापमानेनापमानितो विजयचन्द्रः स्वभवनान्निःससार। विपुलामवनीमटन् कुमारः श्रीकीर्तिधराचार्यस्य पादमूलं लब्धवान्। तं दृष्ट्वा नत्वा च आत्मानं धन्यं मन्यमानो विनयेन विहिताञ्जलिः तं तुष्टाव। तथाहि—

" न वै निरन्तरै रम्भारामैः शाम्यन्ति ये खलु। ते सर्वे दुःखसंतापाः शीर्यन्ते दर्शनात् तव ॥ १ ॥
न ये नानाविधैः क्वाथैश्चूर्णैश्च विविधैरपि। न ये प्राज्यप्रलेपैर्वा न च ये शस्त्रकर्मभिः ॥ २ ॥
न च मंत्रप्रयोगैर्ये छिद्यन्ते जातु देहिनाम्। आमयास्ते प्रलीयन्ते दर्शनेनापि ते मुने! ॥ ३ ॥"

तदनु सर्वमात्मीयमुदन्तजातं गुरवे कथयामास। हे मुनिपुङ्गव! असारादेतस्मात्संसारान्मे विरक्तिर्जाता, सम्यगेतत्स्वरूपं मया ज्ञातम्।

' वस्त्विवबान्धः पुरोवर्ति जिनधर्ममसंविदन्। इयतोऽहं भवान् भ्रान्तो रक्ष रक्षाधुनाऽपि माम् ॥१॥ '

न चास्मिन् रज्यति मे मनः संसारे, परिभ्रमन्नसौ जन्तुः क्वचिज्जायते सुरेषु, क्वचिदुत्पद्यते मानुषेषु, क्वचिदासादयति पशुभावं, क्वचित्पतति महानरकेषु, किं बहुना? अपरः सूर्य इव सर्वं भूवलयमहमभ्रमम्। तथाहि—

" कुत्र कुत्र न वा देशे, कुत्र कुत्र पुरे न वा?। कुत्र कुत्र न वा ग्रामे, कुत्र कुत्राकरे न वा? ॥ १ ॥

कुत्र कुत्र न वाऽटव्यां, कुत्र कुत्र गिरौ न वा ? । कुत्र कुत्र न वा नद्यां, कुत्र कुत्र नदे न वा ? ॥ २ ॥
कुत्र कुत्र न वा द्वीपे, कुत्र कुत्रार्णवे न वा ? । नानारूपपरावर्तैरनन्तकालमभ्रमम् ॥ ३ ॥
अतः परं क्षणेकोऽपि यतिधर्मातीतस्य मे । मा गादिति विभोऽद्यैव दीक्षां शैक्षाय देहि मे ॥ ४ ॥ "

सोऽपि परोपकारपरायणो मुनिराजस्तस्मै संसारासारतां प्रदर्श्य तस्य भृशं वैराग्यमुत्पाद्य भागवतीं दीक्षां ददौ ।

उक्तञ्च—"गाढग्रीष्मे च समन्ताद् दवदाहैस्तापितस्य च । पिपासयाऽभिभूतस्य देहान्निर्गतचेतसः ॥ १ ॥
मूर्च्छया पतितस्यापि कस्यचित् पथिकस्य किम् । स्वप्ने पयोधिकल्लोलैराकुलीकृतबिन्दवः ॥ २ ॥
संपीता बहवस्तेन तृष्णा नैव प्रशाम्यति । तथा विषयभोगेन भोगेच्छा न निवर्तते ॥ ३ ॥"

ततः पश्चात्स नव्यमुनिर्ज्ञानाराधने तत्प्रदाने च सर्वप्रयत्नेन स्वकीयं स्वान्तं संयोजयामास । शीघ्रमेवाचार्यपदं लब्ध्वा सम्यग्रूपेण गच्छं प्रवर्तयामास ।

परं च, कर्मणो वैपरीत्येन कदाचित्सूत्रार्थप्रदाने विमनीभूय तूर्ष्णीं तस्थौ । मुनिभिर्बहुधा पृष्टोऽपि नैकमपि पदं पाठयामास । ततो हितेच्छवो मुनयस्तं शिक्षयामासुस्तथापि स्वकीयं व्यवसितं न मुमोच । अपि च वक्रोक्तिभिस्ताननेकान्युत्तराणि दत्वा भूयश्चैवं प्राह–' किं मासतुपादयो नैव शिवमापुः ? ' । एवं भूयो भूयो ज्ञानस्य विराधनां कृत्वा स विजयसूरिः कालं कृत्वा सौधर्मकल्पे देवो बभूव । तत्र स्वपुण्यप्रभावेण उपार्जितानि सुखान्यनुभूय तत्रत्यं स्वायुः पूरयित्वा अन्ते पद्मनाभखण्डनगरे धनंजयनामश्रेष्ठिनो वल्लभायाः शिवायाः कुक्षितः पुत्रः संजातस्तस्य अनङ्गदत्त इति नाम पिता चकार । क्रमेण

वर्धमानोऽसौ शिशुर्यदाऽष्टवार्षिको जातस्तदा तस्य पिता महत्या विभूत्या विद्याग्रहणार्थं तं कुमारं कलाचार्याय समर्पयामास। सोऽपि महता प्रयत्नेन तं पाठयामास। बालोऽपि रात्रिंदिनं भणति स्म। तथापि पूर्वज्ञानविराधनेन नैकोऽपि वर्णं आगच्छति। ततोऽसावाचार्यो विमनीभूय परिश्रान्तः। तस्य पिता तं कुमारं चान्यस्मै गुरवे समर्पयामास। तेऽपि तस्मिन् पूर्वाचार्यवत् विफलीभूताः। एवं क्रमेण पञ्चशतैरध्यापकैरध्यापितोऽपि कुमारः स्निग्धे घटे तोयबिन्दुरिव नैकमपि वर्णमासादयामास। एकदा तेषामेव पुण्यप्रभावेण अज्ञानतिमिरतरणिराचार्यभगवान् तत्र समवसृतः। स च सर्वेषां संशयं चिच्छेद। तं श्रुत्वा स श्रेष्ठिमूर्धन्यस्तं मुनिं नन्तुं तत्राजगाम।

महता विनयेन कृतावनितलमस्तकोऽसौ तं मुनिं नत्वा स्वस्थाने निविष्टः। सुखसातं पृष्ट्वा प्रस्तावे तं मुनिं पप्रच्छ– भगवन्! मदीयेन कुमारेण जन्मान्तरे किं दुष्कर्म कृतम्?, येनास्य विद्या नागच्छति? पञ्चशतैरध्यापकैः पाठितोऽपि नैकोऽपि वर्णं आययौ, शास्त्रस्य तु का कथा?। ततोऽसौ मुनिवरस्तस्य श्रेष्ठिपुत्रस्य सर्वमेव भवान्तरोदन्तमकथयत्। भोः श्रेष्ठिन्! जन्मान्तरे आचार्यभूतेनापि अनेन महती ज्ञानस्य विराधना कृता, अत एव अस्य विद्याप्रतिबन्धो जातः। ततश्चासौ कुमारः स्वभवान्तरं श्रुत्वा तस्य मुनेर्दिव्यप्रभावेण जातिस्मृतिं प्राप्य तदनु भवभीतस्तं मुनिं नमस्कृत्य प्रार्थयामास। हे मुने! तथा मां शिक्षय, येन जन्मान्तरीयं पापमुपशाम्येत्। ततश्च गुरुणा भणितम्– भो वत्स! त्वया सर्वेषां ज्ञानिनां सर्वप्रयत्नेन वन्दनं वैयावृत्यं च विधेयम्। तथा ज्ञानेच्छुभ्यो यथाशक्ति पुस्तकानि तदुपकरणानि च ढौकनीयानि, ज्ञानस्य लेखनं पूजनं च यथाशक्ति कर्तव्यम्। तत्सर्वं श्रुत्वा पित्रा समं गृहस्थधर्मं प्रतिपद्य आचार्यपादान् नत्वा स्वभवनमगात्। आचार्यभगवन्तोऽपि सपरिवारा अन्यत्र क्वापि विजह्रुः। कुमारश्च

ततः प्रभृति गुरूपदिष्टं धर्मं सम्यक् पालयामास। पश्चात् श्रीगुप्ताचार्यस्य चरणान्तिकमुपलभ्य भागवतीं दीक्षां प्रतिजग्राह। ततश्च तीव्रं तपः परिचरन् विशेषतो ज्ञानिनां भक्तिं कुर्वाणो ज्ञानबहुमाने दत्तचित्तः गुरूणामन्तिके सम्यक् श्रुतं प्रतिजग्राह। ततश्च लघुभूते ज्ञानावरणकर्मणि श्लोकसंचयात् स विपुलं श्रुतमासादयामास। क्रमशश्च पदानुसारिणीलब्धिमाप्तः श्रुतसागर-पारगो बभूव। गुरवोऽपि योग्यं तं शिष्यं विज्ञाय आचार्यपदे स्थापयामासुः। स च मुनिवरः प्रमादपञ्चकेन निर्मुक्त आचारपञ्चकेन युक्तः पञ्चविधे स्वाध्यायेऽनेकान् भव्यजनान् प्रवर्तयामास। कदाचित् प्राक्पुण्यप्रभावेण क्षपकश्रेणिमासाद्य क्षपितघनघातिकर्मा केवलज्ञानमुत्पादयामास। बहुकालं महीमण्डले विहृत्य स्वकीयं चरित्रं जनेभ्यः श्रावयन् कर्मकलंकविमुक्तः शाश्वतं पदमवाप इति। विजयकुमारो मुनिः सर्वमुदन्तं कथयित्वा प्रोवाच– ज्ञानदानस्य परमार्थः संक्षेपान्मया वर्णितः।

अस्मिन् विषये अभयदानस्य मुख्यताऽऽख्यानार्थं मेघरथस्य कथा वर्णिता। ज्ञानसम्पन्नविदुषां कृते ज्ञानदाने स्वाधीनता वरिवर्ति। धनसम्पन्नैर्वदान्यैर्धनमेव दातुं शक्यते। सर्वेभ्यो दानेभ्यो महत्फलप्रदं कठिनमभयदानमेव प्रवदन्ति मनीषिणः। सर्वैरपि मानवैः कर्तुं शक्यते। तत्र नैव केषामपि स्वाधीनता व्याहन्यते। अस्मिन् प्रस्तावे षोडशतमस्य भगवतस्तीर्थङ्करस्य शांतिनाथस्य दशमो भवो मया निरूप्यते, सावधानेन मनसा श्रूयताम्—

एतस्मिन् जम्बूद्वीपे पूर्वविदेहमण्डले पुष्कलावतीविजये सीतानाममहातटिनीतटे पुण्डरीकिणीनाम नगरी विद्यते। तत्र घनरथनाम तीर्थङ्करोऽभवत्। तथा च अवधिज्ञानसम्पन्नः प्रभोः श्रीशान्तिनाथस्य जीवः प्रियमत्याश्चाङ्गरुहः मेघरथनामा नृपो बभूव। स कथंभूतः? घनरथतीर्थंकरस्य गृहस्थसुतः। तस्य खलु वामलोचनाशिखरशेखरीभूता प्रियमित्रानाम्नी प्रणयिनी

चासीत्। तयोश्च मेघसेनाभिधस्तनूरुहो जज्ञे, स च रौहिणेय इव सर्वकलाकलापाकरो जातः। कस्मिंश्चित् समये स नृपः प्रियया सहितो देवरमणीये उद्याने क्रीडार्थं जगाम। तत्रासंख्यजनसंकुले सभामण्डपे सिंहासनोपरि यावत्तस्थौ तावदेव तस्य पुरो भूतरूपाणि विकुर्व्य नाट्यकलाकुशलैर्नाट्यप्रकारैः प्रेक्षणकं प्रारेभे। ते चैवं स्वकौशलं प्रकाशयामासुर्येन सर्वेषां मनांसि विस्मितानि संजातानि। तदा तेषु तस्मिन्नेव समये नभसोऽतीवदेदीप्यमानमेकं विमानं तत्राययौ। तस्मिन् विमाने विराजमानं वरयुवतिसंयुतमेकं प्रधानपुरुषं विलोक्य तस्य प्राणवल्लभा प्रियमित्रा राजानं प्राह- हे प्राणाधिनाथ ! अतीव मनोहरा रूपलावण्यसम्पन्ना रतिप्रतिरूपा केयं नारी ?, कश्चायं प्रधानपुरुषः ? केन कार्यजातेनात्र समागतः ?, इति सर्वं विमृश्य कथयन्तु महानुभावाः। ततश्च अवधिज्ञानसंयुक्तो मेघरथः प्रियामब्रवीत्। हे प्रिये ! अत्रत्यं सर्वं वृत्तान्तं समाहितधिया भवती शृणोतु।

अस्मिन् जम्बूद्वीपे भारते वर्षे वैताढ्यपर्वतस्योत्तरस्यां श्रेण्यामिन्द्रपुरीव विमलाभिधा काचिन्नगरी विद्यते। तत्र च विद्युद्रथो नृपो वसति, मानसवेगा नाम तस्य प्राणेश्वरी वर्तते। सिंहरथो नाम तयोर्नयनानन्दकरः कुमारो बभूव। तस्य च वेगवती नाम मनोहारिणी प्रेयसी। एकदा विद्युद्रथस्य नृपस्य स्वत एव संसाराद् विरक्तिर्जाता। ततश्च पुत्रं राज्ये संस्थाप्य सुगुरुपार्श्वे गत्वा भागवतीं दीक्षां गृहीत्वा क्षपितसकलकर्मकलापः सन् अक्षयं शिवमाप। इतश्च विद्याधरचक्रवर्तिकल्पः सिंहरथश्चैकदा चिन्तायां स्वकीयं मानसं योजयामास। अरण्यस्थमालतीकुसुमोपमं मदीयं जन्म एतावत्कालपर्यन्तं सर्वथा निरर्थकमगात्।

" गुणप्रकर्षरूपाणां, कृतज्ञानां महात्मनाम्। इदमेव स्फुटं लिङ्गं, यद् गुरोर्भक्तिपूजनम् ॥ १ ॥
स महात्मा स पुण्यात्मा, स धन्यः स कुलोद्भवः। स धीरः स जगद्वंद्यः, स तपस्वी स पंडितः ॥ २ ॥

" यः किंकरत्वं प्रेष्यत्वं, कर्मकरत्वमञ्जसा। दासत्वमपि कुर्वाणः, सद्गुरूणां न लज्जते ॥ ३ ॥
स कायः श्लाघितः पुंसां, यो गुरोर्विनयोद्यतः। सा वाणी या गुरोः स्तोत्री, तन्मनो यद् गुरौ रतम् ॥ ४ ॥
अनेकशतकोटिभिरुपकारपरैरपि, धर्मोपकारकर्तॄणां निष्क्रयो न विधीयते ॥ ५ ॥ "

नाद्यावधि मया कदापि अर्हन् जिनेश्वरो विलोकितः। न वै समाहितेन मनसा ध्यातः, न वा कदाचिदपि तस्य सपर्या विहिता, न वा सर्वदुरितक्षयकारिणी पीयूषमयी तन्मुखभवा देशनाऽपि अश्रावि।

अतः सकलत्रश्चाहं विमानवरमधिरुह्य धातकीखण्डस्य पश्चिमविदेहे सुवल्गुनामनि विजये खड्गपुरे गत्वा तत्र विहरन्तम् अमितवाहनजिनेश्वरं प्रणम्य तन्मुखोद्भवां देशनां च श्रुत्वा स्वकीयं जननं सफलयामीति विचिन्त्य "देवानामिव विद्याधराणां कृते नैव किमपि असाध्यं भवति" इति सर्वं समीहितं विधाय प्रभुं नन्तुं चचाल। तत्र गत्वा महता विनयेन प्रभुं तुष्टाव। स विशेषतश्चैवं विचिन्तयामास—

" आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि, नूनं न चेतसि मया विधृतोऽसि भक्त्या।
जातोऽस्मि तेन जनबान्धव ! दुःखपात्रं, यस्मात् क्रियाः प्रतिफलन्ति न भावशून्याः ॥ १ ॥
त्वं नाथ ! दुःखिजनवत्सल ! हे शरण्य !, कारुण्यपुण्यवसते ! वशिनां वरेण्य !।
भक्त्या नते मयि महेश ! दयां विधाय, दुःखाङ्कुरोद्दलनतत्परतां विधेहि ॥ २ ॥ "

इत्यादि प्रकारेण स्तुत्वा वंदित्वा तद्धर्मदेशनां च श्रुत्वा सुखेन स्वपुरीं प्रति निवर्तमानो यावदग्रागच्छति तावदेवास्य विमा-

नमधः स्खलितम्। तत्पतनकारणं गवेषयन्नत्र स्थितं मामपश्यत्। ततश्च रुष्टोऽसौ मामुत्पाटयितुं संलग्नोऽभूत्। तदनु वामेनैव करेणाहं मनाक् तमाक्रमम्। ततश्च विरसीभूतोऽसौ केसरिणा आक्रान्ता गौरिव तारस्वरेण बहु चुक्रोश। ततस्तस्य प्राणप्रिया तथाविधं तं विलोक्य भयभीता वेपितशरीरा मच्छरणं प्रपन्ना। हे स्वामिन्! दयस्व, अस्यापराधस्त्वया क्षन्तव्य इति बहुविधं मां प्रार्थितवती। ततश्च संजातकरुणोऽहं तममुञ्चम्। ततश्च तुष्टोऽसौ विद्याधरो भूतानां स्वरूपाणि विकुर्व्य ततः स प्रेक्षणकं करोति। पश्चात् प्रकृतिस्थो भूत्वा प्रियया सहितश्चात्रागच्छति इति श्रुत्वा विस्मयमापन्ना प्रियमित्रा पुनरपि राजानमपृच्छत्– जनाधिनाथ! भवान्तरे चानेन किं सुकृतमनुष्ठितम्?, येन चेदृशी महर्द्धिः समासादिता। तत्पश्चात् ज्ञाननिधिर्महानुभावो मेघरथो मधुरया गिरा वक्तुमारब्धवान्।

हे सुभ्रु! अयं खलु जम्बूद्वीपे भारतवर्षे पुष्करार्द्धे संघपुरे राज्यगुप्तो नाम कुलपुत्रोऽभवत्। स च दैन्यदावानलसंधुक्षितश्चान्येषां कार्याणि विधाय महता कष्टेनाजीविकां निर्वहति स। तस्य मनोहारिणी पतिभक्तिमती संखिया नाम प्रियाऽऽसीत्। तौ दम्पती एकस्मिन् दिने संघनामकपर्वते फलान्याहर्तुं गतवन्तौ। तत्र गिरौ खेचरपरिषद्मध्ये विराजमानं सर्व्वगुप्तनामानं मुनिपुङ्गवं विलोकयामासतुः। ततश्च तौ विहिताञ्जली कृतावनितलमूर्धानौ महत्या भक्त्या तं ववन्दाते। तदनन्तरं कमपि धार्मिकोपदेशं श्रोतुकामौ तत्पुरतः स्थितवन्तौ। मुनिरपि तयोः पुरतस्तपसः प्राधान्यं विस्तारेण वर्णयामास। तथाहि–

"यत् साध्यं यद् दुराराध्यम्, यद् ध्येयं यच्च दुर्लभम्। तत्सर्वं तपसा साध्यम्, तपो हि दुरतिक्रमम्॥ १॥"

ततश्च संसारचक्रभ्रमभीताभ्यां ताभ्यां सर्वेषां कल्याणकारकोऽसौ मुनिराजः पृष्टः—

परमकारुणिक ! दयानिधे ! मुनिप्रवर ! अस्मादृशानां पापानां कृते किमपि सुखेन साध्यं यत्तपो विद्यते, तद् दयां विधाय कथय, येन वयमपि कलुषं क्षपयामः । ततश्च मुनिनाऽपि द्वात्रिंशत्कल्याणकनाम तपस्तयोरुपदिष्टम् । तदन्तु तावपि तत्तपः प्रतिपद्य तं मुनिवरं प्रणम्य पश्चात् स्वगृहं प्रति प्रतिनिवृत्तौ । तदनन्तरं विधिपूर्वकं मुनिनोपदिष्टं तत्तपः सहर्षं यथा स्यात्तथा ताभ्यामाराधितम् ।

" बत्तीसइकल्लाणो नाम तवो तेण तेसिमुवदिसिओ । ताइं तयं पडिवज्जिय गयाइं गेहे गुरुं नमिउं ॥ २५६ ॥
तो ताइं पहिट्ठाइं अट्ठमभत्ताइं दुण्णि कुव्वंति । बत्तीस चउत्थाइं पसंतचित्ताइं तम्मि तवे ॥ २५७ ॥
पारणगदिणे दुण्णि वि निप्फण्णे भोयणम्मि पवरम्मि । चक्खुं खिवंति बाहिं जइ अतिही कोइ इह एइ ॥२५८॥ "

अपि च प्राणिनां पुण्याधिक्येन सर्वे समारम्भाः सानुकूला भवन्ति । अथ सम्पन्ने तपसि तत्पारणकदिने कमपि सुपात्रमिच्छतोस्तयोस्तत्पुण्यप्रभावेण धृतिधरनामकस्तपोधनो महामुनिस्तत्राजगाम । तं विलोक्य आत्मानं धन्यं मन्यमानौ प्रोत्फुल्लहृदयौ तौ तं मुनिपुङ्गवं महत्या भक्त्या प्रतिलाभयामासतुः । पुण्यातिशयेन शुद्धभावेन चोभौ स्वमनसि चैवं भावनां भावयामासतुः ।

" धन्योऽहं कृतकृत्योऽहं निस्तीर्णोऽहं भवार्णवात् । संसारभवकान्तारे यद् दृष्टोऽस्ति भवान् प्रभो ! ॥ १ ॥ "

इत्यादि सर्वं विभाव्य पुण्यानुमोदनं कुर्वन्तौ पारणं चक्रतुः । अथैकस्मिन् समये सर्वगुप्तनामा मुनिराजस्तस्मिन्नेव पुरे भूयः समाजगाम । श्रुतधर्मसम्पन्नौ च तौ तत्पार्श्वे गत्वा तं मुनीश्वरं प्रणम्य पश्चात् तत एव शिवदायिनीं भागवतीं

दीक्षां जगृहतुः । ततश्च नवदीक्षितोऽसौ राज्यगुप्तमुनिराज आचाम्लवर्धमाननामकं तपश्चचार । प्रान्ते चानशनेन मृत्वा ब्रह्मलोके सुरो बभूव । तत्र च तपसः पुण्यप्रभावेण दशसागरोपमपर्यन्तं दिव्यानि सुखानि समनुभूय सर्वं स्वायुष्यं समाप्य पश्चात् सोऽयं सिंहरथः खेचरेश्वरो जातः ।

विहिततीव्रतपोऽनुष्ठाना सा संखिया साध्वी अपि च्युता तस्मिन्नेव ब्रह्मलोके देवत्वेन चोत्पद्येयं खेचरी बभूव । पूर्वभवस्नेहवशादत्रापि अस्यैव प्रणयिनी जाता । इत्थं प्रियया पृष्टो महाराजो मेघरथः सर्वमुदन्तजातं वर्णयामास । हे प्रिये ! पारणान्ते सुपात्रदानस्य प्रभावेण ताभ्यामीदृशी महर्द्धिः समासादिता । अत्रापि अनुपमं सुखमनुभवतः । इतोऽनन्तरं गृहे गत्वा राज्ये स्वपुत्रं निवेश्य इमौ द्वावपि मम पितुः घनरथतीर्थंकरस्य पार्श्वे प्रव्रज्यां ग्रहीष्यतः । इदं सर्वमुदन्तजातं श्रुत्वा सिंहरथः खेचरो मेघरथं प्रणम्य भार्यया सह निजभवनमाजगाम । तदनन्तरं प्राप्तवयस्कं निजतनयं राज्ये नियुज्यैष सभार्यः चारित्रं गृहीत्वा विविधानि तपांसि तप्त्वा क्षपिताखिलकर्मकलापः क्रमेण सिद्धिपदं प्राप्तवान् ।

मेघरथस्य नृपतेः कथावशेषं चैवम्—

" राजा मेघरथो देवरमणोद्यानतस्ततः । प्राविशत् सपरीवारो नगरीं पुंडरीकिणीम् ॥ १ ॥
अपरेद्युर्मेघरथः पौषधौकसि पौषधी । धर्ममाख्यातुमारेभे जिनाख्यातं विपश्चिताम्[1] ॥ २ ॥
तस्योत्संगे तदानीं च संजातभयवेपथुः । पारापतः पपातैको मुमूर्षुरिव[2] दीनदृक् ॥ ३ ॥ "

१. विदुषाम् । २ मर्तुमिच्छुः ।

अभयं याचमानं तं खगं मानुषभाषया । मा स्म भैषीर्मा स्म भैषीरित्यभाषिष्ट भूपतिः ॥ ४ ॥
एवमाभाषितस्तस्थौ सुस्थः पारापतस्ततः । बालः पितुरिवोत्संगे राज्ञः कारुण्यवारिधेः ॥ ५ ॥
भक्ष्यं ममेदं मुंचाशु राजन्निति वदन्नथ । तस्यानुमार्गमेवागाच्छ्येनोऽहेरिव पक्षिराट् ॥ ६ ॥
श्येनमूचे नृपोऽप्येवं नार्पयिष्याम्यमुं तव । क्षत्रियाणां न धर्मोऽयं शरणार्थी यदर्प्यते ॥ ७ ॥
अपरं च तथापीदं युज्यते न हि धीमतः । परप्राणापहारेण स्वप्राणपरिपोषणम् ॥ ८ ॥
उत्खन्यमाने पिच्छेऽपि यथा ते भवति व्यथा । अन्यस्यापि भवत्येवं मार्यमाणस्य का कथा ? ॥ ९ ॥
जग्धेनाप्यमुना तृप्तिर्भाविनी क्षणमेव ते । सर्वजन्मापहारस्तु पक्षिणोऽस्य भविष्यति ॥ १० ॥
पंचेन्द्रियप्राणिवधात् तन्मांसस्य च भक्षणात् । नरके जंतवो यांति सहंते दुःसहां व्यथाम् ॥ ११ ॥
परत्रात्यंतदुःखाय क्षणमात्रसुखाय च । विवेकी तं कथं हन्यात् प्राणिनं क्षुधितोऽपि हि ? ॥ १२ ॥
अपरेणापि भोज्येन क्षुत्पीडा हंत ! शाम्यति । पित्ताग्निः शर्कराशम्यः पयसा किं न शाम्यति ? ॥ १३ ॥
न च प्राणिवधप्राप्तनरकप्रभवा व्यथाः । केनापि हि प्रकारेण शाम्यन्ति सहनं विना ॥ १४ ॥
ततः प्राणिवधं मुंच धर्ममेकं समाचर । भवे भवे येन सुखं प्राप्नोषि त्वमसंशयम् ॥ १५ ॥

१ पक्षिविशेषः "बाज" इति भाषायाम् । २ गरुडः । ३ खादितेन । ४ शर्करया शम्यते यः पित्ताग्निः स दुग्धेनापि शम्यत इत्यर्थः । ५ विना भोगम् ।

मनुष्यभाषया श्येनोऽप्यभाषत महीपतिम् । भवंतं मद्भयादेष कपोतः शरणं ययौ ॥ १६ ॥
क्षुत्पीडयाऽर्दितोऽहं तु कं यामि शरणं वद । सर्वेष्वप्यनुकूला हि महान्तः करुणाभनाः ॥ १७ ॥
यथैनं त्रायसे राजंस्तथा त्रायस्व मामपि । इमे गच्छंति हि प्राणा बुभुक्षाबाधितस्य मे ॥ १८ ॥
धर्माधर्मविमर्शो हि सुस्थितानां शरीरिणाम् । धर्मप्रियोऽपि किं पापं न करोति बुभुक्षितः ? ॥ १९ ॥
तद्धर्मवार्तयाऽलं मे भक्ष्यभूतोऽयमर्प्यताम् । क एष धर्मस्त्रातव्य एको मार्यस्तथाऽपरः ! ॥ २० ॥
तृप्तिर्भवेन्महीपाल ! न च भोज्यांतरै[1]र्मम । सद्यः स्वयंहतप्राणिस्फुरन्मांसाशनो ह्यहम् ॥ २१ ॥
राजाऽप्येवमवोचत् तं स्वमांसं ते ददाम्यहम् । तोलयित्वा कपोतेन सुहितीभव[2] मा मृथाः ॥ २२ ॥
आमेत्युक्तवति श्येने तुलायामेकतो नृपः । कपोतं निदधेऽन्यत्र छित्त्वा छित्त्वा स्वमामिषम् ॥ २३ ॥
उत्कृत्योत्कृत्य मांसं स्वं राजाऽक्षैप्सीद् यथा यथा । तथा तथा कपोतः स भारेण ववृधेतराम् ॥ २४ ॥
भारेण वर्धमानं तं कपोतं प्रेक्ष्य भूपतिः । स्वयमेवाध्यारुरोह तुलामतुलसाहसः ॥ २५ ॥
तुलाऽधिरूढं राजानं प्रेक्ष्य हाहारवाकुलः । सर्वोऽपि संशयतुलामारुरोह परिच्छदः ॥ २६ ॥
सामन्तामात्यमुख्याश्चाभ्यधुरेवं महीपतिम् । एतदस्मदभाग्येन किमारब्धं त्वया प्रभो ! ॥ २७ ॥
अनेन हि शरीरेण त्रातव्या सकला मही । एकस्य पक्षिमात्रस्य त्राणे त्यजसि तत्कथम् ? ॥ २८ ॥

१ भोज्यरूपः । २ तृप्तो भव ।

किं च कोऽप्येष मायावी त्रिदशो दानवोऽथवा । न हीदृक् पक्षिमात्रस्य भारः संभवति क्वचित् ॥ २९ ॥
जगदुर्यावदेवं ते तावदाविरभूत् पुरः । किरीटी कुंडली स्रग्वी तेजोराशिरिवामरः ॥ ३० ॥
नृदेवं देव इत्यूचे त्वमेकः पुरुषेष्वसि । न चाल्यसे पौरुषाद् यत् स्वस्थानादिव मंदरः ॥ ३१ ॥
सभायां वर्णयामास त्वामीशानदिवस्पतिः । अहं त्वसहमानस्तत् त्वत्परीक्षार्थमागमम् ॥ ३२ ॥
प्राग्जन्मवैराद् युद्धायोपस्थितौ पक्षिणाविमौ । अपश्यं चाभ्यतिष्ठं चाकार्यं चैतत्सहस्व तत् ॥ ३३ ॥
इत्युदित्वा नृपं कृत्वा सज्जं देवो दिवं ययौ । सामन्ताद्याश्च राजानं पप्रच्छुरिति विस्मयात् ॥ ३४ ॥
श्येनपारापतावेतौ कीदृशौ पूर्वजन्मनि । किंहेतु चाऽनयोर्वैरं देवोऽयं प्राग्भवे च कः ? ॥ ३५ ॥
राजाऽप्याख्यज्जंबूद्वीपैरावतक्षेत्रमंडनम् । पद्मिनीखंडमित्यस्ति पुरं श्रीपद्मखंडवत् ॥ ३६ ॥
तत्र सागरदत्तोऽभूत् संपदा सागरोपमः । भार्या विजयसेनेति तस्य चासीदनिंदिता ॥ ३७ ॥
संजज्ञाते तयोः पुत्रौ नामतो धन-नंदनौ । यौवनं च प्रपेदाते वर्धमानौ क्रमेण तौ ॥ ३८ ॥
क्रीडाभिर्विविधाभिस्तौ विहरन्तावुभावपि । गमयामासतुः कालं पितृऋद्धिसमुद्धतौ ॥ ३९ ॥
अन्यदा सागरदत्तं तौ प्रणम्यैवमूचतुः । देशान्तरे वणिज्यार्थमावां तात ! समादिश ॥ ४० ॥
पित्राऽपि समनुज्ञातौ मुदितेन तदैव तौ । सूनोः पुरुषकारो हि हर्षाय प्रथमं पितुः ॥ ४१ ॥

१. को हेतुरस्य तद् वैरविशेषणम् ।

आदाय विविधं भांडं तौ सार्थेन प्रचेलतुः । प्रापतुश्च क्रमान्नागपुरं नाम महापुरम् ॥ ४२ ॥
तत्र व्यवहरन्तौ तौ श्वानौ भक्ष्यमिवैककम् । किंचिदेकं महामूल्यं महारत्नमवापतुः ॥ ४३ ॥
तौ च शंखनदीतीरे तस्य रत्नस्य हेतुना । युयुधाते मिथः क्रुद्धौ दुर्दान्तौ वृषभाविव ॥ ४४ ॥
युध्यमानौ पेततुस्तावगाधे तन्महाह्रदे । विपेदाते च सद्योऽपि लोभः कस्य न मृत्यवे ? ॥ ४५ ॥
विपद्य तावुभौ बंधू उत्पेदाते इमौ खगौ । प्राग्जन्मवैरादेवं च वैरायेते इहापि हि ॥ ४६ ॥
अन्यच्च जंबूद्वीपेऽस्मिन् प्राग्विदेहविभूषणे । सीताया दक्षिणतटे विजये रमणीयके ॥ ४७ ॥
शुभाख्यायां पुरि नृपोऽभवत् स्तिमितसागरः । तस्येतः[1] पंचमभवेऽभूवं पुत्रोऽपराजितः ॥ ४८ ॥
तदा हि बलदेवोऽहं वासुदेवोऽपि मेऽनुजः । अनन्तवीर्य इत्यासीदयं दृढरथोऽस्ति यः ॥ ४९ ॥
प्रतिविष्णुस्तदानीं च दमितारिर्महाभुजः । कनकश्रीकन्यकार्थेऽस्माभिर्युधि निपातितः ॥ ५० ॥
स भ्रान्त्वा भवकांतारे जंबूद्वीपस्य भारते । अष्टापदगिरेर्मूले निकृत्याः सरितस्तटे ॥ ५१ ॥
सोमप्रभाभिधानस्य तापसस्य सुतोऽभवत् । बालं तपश्चरित्वाऽभूत् सुरूपो नामतः सुरः ॥ ५२ ॥ युग्मम् ॥
सोऽयं सुरोऽस्मत्प्रशंसामीशानेन्द्रेण निर्मिताम् । असहिष्णुः समागच्छद् व्यधाच्चैतत्परीक्षणम् ॥ ५३ ॥
तच्छ्रुत्वा वचनं राज्ञो जातजातिस्मृती उभौ । श्येनपारावतौ सद्यो मूर्छया पेततुर्भुवि ॥ ५४ ॥

१. इतोऽस्माद् भवात् पूर्वं पंचमे भवे ।

राजलोककृतैस्तालवृंतानिलजलोक्षणैः । भूयोऽपि संज्ञां लेभाते तौ प्रसुप्तोत्थिताविव ॥ ५५ ॥
तौ स्ववाचोचतुर्भूपं साध्वावां ज्ञापितौ त्वया । प्राग्जन्मदुष्कृतं स्वामिन्नीदृग्योनिनिबन्धनम् ॥ ५६ ॥
स्वामिन् ! युद्ध्वा तदावाभ्यां रत्नं नाम न केवलम् । अतिलोभाभिभूताभ्यां मर्त्यजन्मापि हारितम् ॥ ५७ ॥
इदानीं नारकं जन्माभवन्निकटमावयोः । निषिद्धावंधवत् कूपात् परमावां ततस्त्वया ॥ ५८ ॥
अतः परमपि स्वामिन् ! उन्मार्गाद् रक्ष नौ पुनः । सन्मार्गमादिश शुभस्थानं येन लभावहे ॥ ५९ ॥
तयोश्च योग्यतां ज्ञात्वाऽवधिज्ञानोर्मिवारिधिः । समादिदेशानशनं कालप्राप्तं महीपतिः ॥ ६० ॥
प्रपद्य तावनशनं शुभचित्तौ विपद्य च । उत्पेदाते सुरवरौ मध्ये भुवनवासिनाम् ॥ ६१ ॥

तत्प्रभावेण तावपि भुवनपतिषूत्पन्नौ । नृपोऽपि पौषधं पारयित्वा चिरकालपर्यन्तं पुत्रवत् प्रजाः पालयामास । कस्मिंश्चित् समये पक्षिणोश्चरित्रं विभावयन् लोकतः परमवैराग्यमुवाह । अथ घनरथतीर्थपतिर्द्वितीयदिवाकर इव अज्ञानतिमिरतरणिः सर्वमेव भूवलयं विहरन् तस्मिन्नेव पुरे समवसृतः । ततो मेघरथोऽपि नृपः स्मेराननः सकलपरिजनसमेतस्तं प्रभुं नन्तुं तत्राजगाम । ततश्च सर्वातिशययुक्तं तीर्थाधिनाथं भगवन्तं विलोक्य भावसारया मधुरया गिरा चैवं तं तुष्टाव—

" देवेभ्यो दानवेभ्योऽपि मर्त्यान् मन्ये गरीयसः । त्रैलोक्यबन्धो ! यत्र त्वमुदभूस्तीर्थनायकः ॥ १ ॥
नारकेभ्यो दिवस्थानां को भेदः सुखिनामपि ? । भवेद् येषां प्रमत्तानां न भवत्पाददर्शनम् ॥ २ ॥

१. उक्षणं सेचनम् । २. नारकात् ।

विजृम्भितं तावदेव घूकैरिव कुतीर्थिकैः । न यावद्धि जगन्नाथ ! रवेरिव तवोदयः ॥ ३ ॥
त्वत्पादपक्ष्मलीनेन षट्पदेनेव चेतसा । भगवन् ! कल्पवासेऽपि प्रयान्तु मम वासराः ॥ ४ ॥"

इत्थं भगवन्तं स्तुत्वा तदुपदिष्टां धर्मदेशनां च श्रुत्वा मेघसेननामानं स्वतनयं राज्ये नियुज्य स्वयं च संसाराद् विरक्तः सन् स्वभवनान्निर्गत्य प्रभुपार्श्वे प्रवव्राज । संयमयोगेषु सदैव परायणः शीघ्रमेवैकादशाङ्गीं चाधीत्य दुष्करं तपस्तेपे । विंशतिस्थानकाराधनेन तीर्थकृन्नामकर्म निकाचितं बबन्ध । अथ चाम्बरतिलकगिरिमारूढः स्थिरमानसः सोऽनशनं कृत्वा च्युत्वा च सर्वार्थसिद्धिविमानं प्राप्तवान् । ततश्च्युत्वाऽस्मिन् भरतक्षेत्रे हस्तिनागपुरे एष मेघरथस्य जीवो विश्वसेनभूपतेः अचिराभिधायाः प्राणप्रियायाः कुक्षितः शान्तिनामा षोडशस्तीर्थकृद् बभूव । स च पञ्चमं चक्रवर्तिपदं परिपाल्य पश्चाद् गृहीतश्रामण्यः षोडशो धर्मचक्रवर्ती भूत्वा शिवमाप्तवान् । हे भद्रे ! सुदर्शने ! अभयदानस्येदं माहात्म्यं मया सम्यग्रूपेण वर्णितम् । अन्यद् धर्मोपग्रहादिकम् अस्यैवान्तर्भूतमवेहि । तच्च दायक–ग्राहक–काल–भावभेदेन चतुर्विधं प्रोक्तम् ।

अत्र ये जनाः सर्वोपाधिविशुद्धं दानं मुनिप्रवरेभ्यो ददति ते जनाश्चिरकालपर्यन्तं भूरिभद्राणि पश्यन्ति, प्राप्नुवन्ति च ।

यथा वीरभद्रः तद्वृत्तान्तश्चैवम् । अस्मिन् भरतक्षेत्रमध्ये कुरुदेशे विपुलरमाविलसितं पद्मिनीखण्डनाम नगरं विद्यते । तत्र सहस्राम्रवनोद्याने चैकस्मिन् समये श्रीअरनाथजिनेश्वरः समवसृतः । अत्र भगवतो धर्मोपदेशानन्तरं तस्य कुम्भनामा गणधरः सिद्धान्तामृतकुम्भसमानमानसो द्वितीयस्यां पौरुष्यां धर्मोपदेशं चकार । तस्मिन्नेव समये केनचिद् वामनेन संयुक्तः

सागरदत्तनामा श्रेष्ठिवरस्तत्राजगाम। स च भक्त्या सर्वान् मुनिजनान् नत्वा गणधरेणोक्तां देशनां समाहितमनसा शुश्राव। पश्चात् प्रस्तावं लब्ध्वा विहिताञ्जलिः सविनयं श्रीकुम्भगणधरं प्राह– भगवन्! एतस्मिन् चराचरमये भुवनतले मादृशो दुःखी जीवश्चेदानीं कोऽपि नास्ति। ततश्च प्रभुणा प्रोक्तम्– भद्र! दुःखमूलोऽयं संसारस्तथापि कथय निजदुःखमिति। ततोऽसौ श्रेष्ठी सर्वं निजदुःखमवर्णयत्।

प्रभो! जिनमती नाम मत्प्राणवल्लभाऽस्ति। तत्कुक्षिसम्भवा सकलकलाकलापपारङ्गता रूप–लावण्य–सम्पन्ना प्रियदर्शना नाम मम दुहिता अस्ति। संप्रति यौवनं प्राप्तवती। ततश्चाहं तद्योग्यवरविलोकनार्थमनेकान् देशान् अभ्रमम्; किन्तु तद्योग्यं वरमलब्ध्वा दुःखाकुलोऽभवम्। महति चिन्तापयोधौ मयि निमज्जति सति मदीया प्रिया प्रोवाच– हे प्राणनाथ! किमर्थं खिद्यसे चेदानीं म्लानाननो दृश्यते भवान्। तदनु चाहं सर्वं दुःखकारणं तस्यै न्यवेदयम्। सा प्राह– नाथ! यथा पश्चात्तापो न भवेत्तथैव विधातव्यम्। सोऽपि प्रोवाच– भगवन्! एवं चिन्तयमानस्य मम कियान् समयो व्यतीयाय। अथ चैकस्मिन् समये ताम्रलिप्त्यां नगर्यां ऋषभदत्तो नाम सार्थवाहो वसति स्म। स वाणिज्यकृतेऽत्राजगाम, तेनाहममिलम्। ततश्च साधर्मिकं महर्द्धिकं च तं ज्ञात्वा तेन समं मया मैत्री कृता। अथान्यस्मिन् दिने रूप–लावण्य–सम्पन्नां मम पुत्रीं विलोक्यासौ प्रोवाच। निरुपमरूपसम्पन्नो गान्धर्वकाव्यगुटिकाप्रयोगेषु प्रवीणो वीरभद्रो नाम मम नयनानन्दकरो नन्दनोऽस्ति। तस्यानुरूपां कन्यामन्वेषमाणस्य मम बहवो दिवसा व्यतीताः, परन्तु अद्यैव तस्य योग्या तव पुत्री मया विलोकिता। यदि तयोर्योगः स्यात्, तर्हि भवत्वनयोर्वरणमहोत्सवः। मयाऽपि युक्तिमत् तस्य वचनमङ्गीकृतम्। तेन चेतः स्वनगरं

गत्वा महत्या वरयात्रया वीरभद्रः प्रेषितः। तदनु सर्वाङ्गसुन्दरं तं वीरभद्रं विलोक्य मया महत्या समृद्ध्या तेन सह स्वपुत्री परिणायिता। असावपि कतिचित् दिनानि अत्र स्थित्वा मामापृच्छ्य प्रियदर्शनया सहाविच्छिन्नैः प्रयाणैर्निजभवनमगात्।

उक्तञ्च—"श्वशुरगृहनिवासः स्वर्गतुल्यो नराणाम्, यदि वसति विवेकी पञ्चषड्वासराणि।
दधिघृतमधुलोभान्मासमेकं वसेचेत्, स भवति खरतुल्यो मानहीनो मनुष्यः॥ १॥"

अथान्यस्मिन् समये मया चैवं श्रुतम्–यदसौ मम जामाता प्रसुप्तां मम पुत्रीं विहाय क्वापि गतः। ततः तस्य पित्रा तदन्वेषणाय बहव उपायाः कृताः, परन्तु नैव तस्य समाचारोऽलभ्यत। एवं महति काले व्यतिक्रान्ते सति चायं वामनस्तस्य समाचारं मामकथयत्, परन्तु तत्र मे मनो नैव विश्वसिति। अतो भवन्तो ज्ञानपयोनिधयः सर्वदर्शिनो ममोपरि दयां विधाय याथातथ्यं कथयन्तु इति।

अथ स भगवान् कुम्भस्तं प्रति प्रणिजगाद। हे श्रेष्ठिन्! वीरभद्रेण चैवं विचारितम्–द्वासप्ततिकलाकुशलेन सिद्धसकलमंत्रेण ज्ञातसकलविज्ञानेन अवगतदिव्यगुटिकाप्रयोगेण शिक्षितविस्मयजनकयोगेनापि मया पितुर्लज्जया ते प्रयोगाः प्रयोक्तुं न शक्यन्ते; अतो देशान्तरं गत्वा स्वकीयां विद्यां सफलयामि, लप्स्ये चाहं सर्वातिशायिनीं प्रतिष्ठामिति विचिन्त्य पुरान्निर्गत्य ततः केनचिद् गुटिकाप्रयोगेण स्वकीयं शरीरं श्यामं विधाय स्वेच्छया सर्वं भुवनमण्डलं बम्भ्रम्यते। ततः सा च तव दुहिता श्वशुरमापृच्छ्य तव गृहमागतवती।

यतः कुलाङ्गनानां पतिमन्तरेण पितृभवनमेव शरणं भवति। असौ तव जामाता सकलां क्षोणीं पर्यटन् सिंहलद्वीपमध्ये

रत्नाकरमिव रत्नाकरसनाथं रत्नपुरं जगाम। तत्र शंखनामा श्रेष्ठी वसति स्म। स चैकस्मिन् समये स्वकीयहट्टोपरि स्थितं तं विलोक्य प्रोवाच। भद्र! कुत्रत्यो भवान्?, केन कार्यजातेनात्र समागतः?। ततस्तेन प्रत्युत्तरितम्– तात! ताम्रलिप्तिपुरवास्तव्यं वणिक्तनयं मामवेहि।

पितू रोषेण गृहान्निर्गत्य देशाद् देशान्तरं परिभ्रमन्नत्रागतोऽस्मि। तच्छ्रुत्वा शङ्खेनोक्तम्– पुत्र! वन्दनीयं जनकं विहाय त्वमितस्ततो भ्रमसि इति न शोभनमनुष्ठितं भवता, भवतु यद् भाव्यं तत्तु भूतमेव, तथाऽपीदानीमपुत्रस्य मे गृहे त्वं स्वगृहमिव पुत्रत्वेन तिष्ठ, स्वेच्छानुकूलम् इदं विभवजातं भुङ्क्ष्वेत्युक्त्वा सप्रणयं तं कुमारं श्रेष्ठी निजभवनमानीतवान्। इत्थं प्राप्तादरः सोऽपि पूर्वभवपुण्यप्रभावेण निजभवनमिव तत्र स्थितः सन् विविधानि सुखान्यनुभवन् सुखेन कालं गमयामास।

इतश्च तन्नगरनाथस्य रत्नाकरराजस्य सकलकलाकलापप्रवीणा स्वकुलललामभूता अनङ्गसुन्दरी नाम तनया आसीत्। सा पुरुषमात्रे द्वेषवती अतः पुरुषद्वेषिणीति नाम्ना ख्याता। परन्तु तस्या विनयैकभूम्या विनयवत्या सहातीव सख्यभावमस्ति, अतः सा विनयवती प्रत्यहं तद्भवनं गच्छति स्म। अथ कस्मिंश्चिद् दिने वीरभद्रस्तामपृच्छत्। भगिनि! प्रत्यहं त्वं केन कारणेन कस्य गृहे व्रजसि? यदि न गोप्यं चेत्तर्हि कथय। ततश्च सा मूलतः सर्वं तस्मै निवेदयामास। ततो वीरभद्रः पुनर्जगाद। भगिनि! यद्येवमस्ति तर्हि केन प्रकारेण सा स्वकालं गमयति। विनयवती प्राह– साऽतीव वीणावादनकुशला तामेव सदा क्वणयति। वीरभद्रो निजगाद–अहं वामभ्रुवां रूपं कर्तुं जानामि। "यद्येवमस्ति तर्हि सुखेन तत्रागच्छ" इत्युक्त–

वत्यां विनयवत्यामसौ वीरभद्रः स्त्रीरूपं विधाय विनयवत्या सह अनङ्गसुन्दर्या भवनं जगाम। ततश्चानङ्गसुन्दरी विनयवतीमपृच्छत्– हे भगिनि! रतिप्रतिमेवेयमपरा का? ततः साऽऽह हे भर्तृदारिके! इयं मम स्वसा भवतीं द्रष्टुमागता। राजपुत्री प्राह– तर्हि इयता कालेन कथं नानीता? आस्तां तावत् "भवत्या भवनं नैव सर्वगम्यमिति"। अथ कस्मिंश्चिन्मानससरोवरे केनचिद् विरहेण खिन्नमनस्का चैका राजहंसी कालं गमयन्ती अतिष्ठत्। तां चेयं राजपुत्री सविशेषं विलोकितवती। तस्मिन् समये वीरभद्रो राजपुत्रीं प्राह। भद्रे! यद्यपि चिरकालेन चैनां भवती विलोकयति, तथापि नैनां चित्रयितुं शक्नोषि। सा प्राह– तर्हि त्वयैव विरहातुरा चेयं चित्र्यतां, येनाहं तव कौशलमवगमिष्यामि। ततश्च तथैव तेन सा चित्रीकृता, तां च विलोक्य अनङ्गसुन्दरी प्रोवाच– भद्रे! बाढं साधु त्वया चित्रिता। अपूर्वमिदं तव कौशलमहं मन्ये। अन्तरङ्गभावप्रकाशनेऽतीव त्वं पट्वी प्रतिभासि। अश्रुपूर्णमस्या नयनयुगलं महतीमन्तर्व्यथां सुतरामेव व्यनक्ति। शिथिलं मृणालचञ्चु, शिथिलेयं ग्रीवा, उत्पतनाक्षमौ च पक्षौ, समग्रमिदं चित्तक्षोदकरं हृदयविदारकं च सर्वेषां कृते प्रतिभाति।

शून्यमनसश्चास्या इयमाकृतिः अकथितामपि विरहाकुलामवस्थां स्वत एव कथयति। पुनश्च सा नृपपुत्री विनयवतीमाचष्टे– सखि! ईदृशचित्रकलाप्रवीणा इयं स्वसा इयत्कालपर्यन्तं कथं नानीता?। ततो वीरभद्रः प्राह—

"नृपतिसद्म सदा जनसंकुलं विविधशस्त्रधरैरपि वेष्टितम्। प्रणयिनोऽपि विशन्ति कथंचन सखि! न मादृशतुच्छजनः पुनः॥"

तच्छ्रुत्वाऽतीव विस्मिता भूयः प्राह– अयि! सखि! इयं काव्यकलायां तु चित्रकलातोऽपि कुशला भविष्यति, अतः प्रत्यहं त्वया सार्धमानेतव्या। ततो राजसुता जगाद– प्रियसखि! किन्नामधेयं तव?। ततो वीरभद्रः प्रोचे– अहं वीरमतीनाम्ना ख्या-

तास्मि। तदनु आनन्दपूर्णहृदा तया अनङ्गसुन्दर्या सादरं विसृष्टे द्वे स्वगृहं प्रति निवर्तयामासतुः। अथ कल्पितवामाभिरूपेण तेन वीरभद्रेण प्रत्यहं तद्भवनं गत्वा कलाविनोदैः सा नृपदारिका भृशमावर्जिता। एवं बहुकाले व्यतीते सति कदाचित् तत-श्चागतं तं विलोक्य श्रेष्ठी प्राह- प्रियपुत्र ! इयत्कालपर्यन्तं त्वं क्व गतोऽभूः ?। आपणे आगतानां जनानामेकाकिना मया उत्तरमपि दातुं नैव शक्यते, किं पुनर्वस्तुजातम् ?। ततश्च वीरभद्रः सप्रणयं सर्वं स्वकीयमुदन्तजातं तस्मै यथार्थं निवेदयामास। अन्यदपि कदाचिदसौ नृपः स्वकन्याया विवाहमपि मया सह कुर्यादिति संभावयामि। अनन्तरं चेयं वार्ता तोये तैलबिन्दु-रिव राजसभायां प्रससार। यत्ताम्रलिप्तीपुरतः कोऽपि निरुपमरूपसम्पन्नः पुरुषश्चात्रागत इति श्रुत्वा तेन नरेन्द्रेण चिन्तितम्-यद्यनेन पुरुषवरेण मम पुत्र्याः परिणयो भवेत्तर्हि शोभनतरं भवेत्। अथ कदाचिद् वीरभद्रेण सा राजपुत्री पृष्टा- भद्रे ! ईदृशरूपलावण्यकलापटीयसी भवती एतान् गुणान् सफलीकर्तुं कथं न स्वानुरूपं कमनीयं कमपि वरं वृणुषे ?। तन्निशम्य सा प्रोवाच- भद्रे ! नैतावत्कालपर्यन्तं मया नानुरूपो वरः समासादितश्चातो वरवार्तयाऽलम्।

उक्तञ्च—"वरा रिक्ता शाला न पुनरपि चौरैः परिभृता, पितुर्गेहे वासो न च पतिरनाचारनिपुणः।
वनावासो भव्यो न च फणिसनाथं सुभवनम्, अतो भद्रे ! मह्यं न भवति वरोक्तिः सुखकरी ॥ १ ॥"

ततो वीरभद्रः प्रोवाच- भद्रे ! यदि कोऽपि तवानुरूपो वरो लभेत, तदा भवती किं विधास्यति ?। ततः सा जगाद- भद्रे ! तदा तं प्राप्य पतित्वेन प्रतिपद्य स्वकीयं यौवनं सफलयामि। क्वास्ते तादृशो वरः ? शीघ्रमेव मां दर्शय इति साऽनङ्ग-सुन्दरी निगद्य विरराम। ततः स वीरभद्रः शीघ्रमेव स्त्रीरूपं दूरीकृत्य युवतिजनमनोहरं स्वकीयं रूपं तस्याः पुरः प्रकाशया-

मास; अचकथच्च– हे भद्रे ! यद्ययं वरस्तुभ्यं रोचते, तर्हि स्वकीयं मनोरथं पिपर्तु भवती। सा च तदवलोकनमात्रेणैव संजातरोमोद्गमा स्मरानलसंतप्तसर्वावयवा तदुपरि मन्दं मन्दं कटाक्षान् क्षिपन्ती कुलाङ्गनात्वेन कथमपि आत्मानं संस्तभ्य कुलाचारोचितं नीतिसारगर्भितं मधुरं वचनं प्रोवाच । भद्र ! तव दिव्यं रूपं विलोक्यैव मया हृदयेन वृतोऽसि, तथापि यथा लौकिकी मर्यादा न विहन्येत तथैव प्रवर्तितव्यमिति । तच्छ्रुत्वा वीरभद्रः प्राह– यथा भवत्यै रोचते तथैव संपादयामि । ततस्तामाश्वास्य स्वभवनमगात् । पित्रे सर्वमुदन्तजातं तेन निवेदितम् । ततः स श्रेष्ठी राज्ञः समीपं गत्वा प्रस्तावनावसरे वीरभद्राय तामनङ्गसुन्दरीं मार्गयामास । भूपोऽपि कन्यानुरूपं तं वरं विलोक्य स्फारोत्सवेन शुभे समये तयोः पाणिपीडनं कारयामास । अपरञ्च दिव्यातिदिव्यं प्रासादादिकं तस्मै सहर्षमदात् । स च पूर्वभवार्जितपुण्यप्रभाववशादत्रापि प्राप्तसर्वर्द्धिप्रसारो दिविस्थः सुर इव विविधान् भोगान् भुञ्जानः सुखेन कालं गमयति स्म । तत्संसर्गेण कतिपयकालेन साऽनङ्गसुन्दरी सुश्राविका बभूव । उक्तञ्च– 'सत्सङ्गतिः कथय किं न करोति पुंसाम् ?' । किं बहुना ? सतां संसर्गेणैव जना इह अमुत्र चानवरतं सुखं भुञ्जते, नात्र विवादावसरः । ततश्च वीरभद्रेण शुभपट्टे भव्यां जिनेश्वरप्रतिमामालिख्य चतुर्विधसंघं चालिख्य तस्याः सम्मुखे संस्थाप्य सविशेषं दर्शिता । तद्दर्शनात् सा दृढपरिणामा जाता। अथैवं बहुकाले व्यतीते सति कस्मिंश्चित् समये वीरभद्रः स्मेराननां प्रियां प्रत्युवाच । हे सुभ्रु ! मह्यमाज्ञां देहि, येनाहं गृहं गत्वा पित्रोश्चरणान् पश्यामि । तच्छ्रुत्वा साऽब्रवीत्– " हे प्राणनाथ ! सतीनां धर्मोऽयं यत् पतिं विना ताः क्षणमपि प्राणान् न धारयन्ति । छायाद्वितीया इव कुलाङ्गनाः स्वामिना सहैव गच्छन्ति; अतः परं भवते यथा रोचते तथा करोतु, भवद्वियोगे नाहं प्राणान् धारयिष्यामि इति । "

“ गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव यत्र परिगतो भवान् ॥ ”

ततश्चैकस्मिन् समये राजानमापृच्छ्य तदनुमोदितस्तां प्रियामादाय यावद् यानमारुरोह, तावदेव केनापि दौर्भाग्येन तत्पोतं भग्नम् । ततः सा बाला एकं काष्ठफलकमुपलभ्य महता कष्टेन कथमपि तीरमासादितवती । ततश्च कस्मिंश्चिदाश्रमपदे गत्वा कस्यापि कुलपतेः पार्श्वे स्थित्वा धर्माराधनतत्परा स्वसमयं गमयामास । तत्पश्चात् तेन कुलपतिना केनचित् तपस्विना सह सा अस्मिन् पद्मिनीखण्डनगरे प्रेषिता । तस्मिन् समये सपरिकरा काचित् साध्वी धर्मध्यानं प्रकुर्वाणाऽत्रातिष्ठत् । सा कदाचिच्छरीरचिन्तार्थं बहिर्गतवती । तत्र तामनङ्गसुन्दरीं विलोकयामास । साऽपि तच्चरणावभिवन्द्य तया सहोपाश्रयमाजगाम । अथ कदाचित् सुव्रतया गणिन्या पृष्टा सती सा सर्वं स्वकीयमाकूतं मूलतस्तस्यै निवेदयामास ।

तत्र संयतिनीनां सन्निधौ प्राक्स्थितवती तत्र पुत्री प्रियदर्शनाऽपि कदाचित् तामनङ्गसुन्दरीममिलत् । एकदा प्रियदर्शना तामपृच्छत्–भद्रे ! कीदृक्स्वरूपस्तव प्राणवल्लभोऽस्ति ? । सा प्रोवाच– भगिनि ! इन्दीवराभो मे प्राणनाथोऽस्ति । ततश्च तत्र पुत्री भूयो जगाद– कनकवर्णेनैव तेन भाव्यम् । तत्र धर्मभगिन्याविव धर्मध्यानं प्रकुर्वाणे गुरुजनस्य सेवनपरे च ते सुखेन कालं गमयतः ।

अथ भग्ने तत्प्रवहणे सोऽपि वीरभद्रः कृतसहजस्वरूपः कस्मिंश्चित् फलके विलग्नो रतिवल्लभनाम्ना केनचिद् विद्याधरेण विलोकितः । ततश्च स्वकीयविमानोपरि तं संस्थाप्य वैताढ्ये गगनवल्लभपुरे स्वमन्दिरे तमानीतवान् ।

ततश्चासौ विद्याधरो वज्रवेगवतीकुक्षिसंभवां रत्नप्रभानाम्नीं स्वतनयां महता आडम्बरेण तेन सह परिणायितवान् ।

ततश्चैकस्मिन् समये स नृपस्तत्स्वरूपं पप्रच्छ। ततोऽसौ प्रोचे राजन्! सिंहलद्वीपवास्तव्यस्य श्रेष्ठिनो बुद्धदासनामाऽहं तनयोऽस्मि। सुरसुन्दरीसदृशी मदीया प्राणवल्लभा अनङ्गसुन्दरी विद्यते। सभार्यश्चाहं यानमारुह्य स्वपुरं प्रत्यचलम्। दुर्भाग्यवशाद् भग्ने प्रवहणे सति भवान् मेऽवलम्बनो जातः, भवताऽहं त्रातश्चात्रानीतश्च। परन्तु तां प्राणप्रियां न जानामि क कथं सा भविष्यति। तस्याः समाचारमन्तरेण सुखेनात्रस्थोऽप्यहं स्वसदृशं नान्यं दुःखिनं मन्ये। तस्मात् हे नृदेव! विद्यानिधे! विद्याप्रभावेण तस्याः समाचारं मह्यं कथय इति भवन्तं प्रार्थयामि। ततः खेचरो व्यजिज्ञपत्- हे पुरुषसिंह! भग्ने प्रवहणे साऽपि दैवात् पयःपूरेणोह्यमानं चैकं फलकं प्राप्य कथमपि तटमवाप। संप्रति पद्मिनीखण्डनामनगरे साध्वीनां समीपे धर्मध्यानेन स्वकीयं समयं गमयति। अथैकस्मिन् समये नभोमार्गेण व्रजन्ति बहूनि दिव्यविमानानि विलोक्य प्रेयसीं चचक्षे। सुभ्रु! विमानारूढा इमे देवाः क व्रजन्ति?। ततः सोक्तवती हे सुभग! सिद्धायतनेषु अर्हतो भगवतो दर्शनार्थं सज्जीभूताश्चैते व्रजन्ति। ततः स तां प्रणयिनीं विमाने संस्थाप्य शीघ्रमेव तत्तीर्थस्थानं प्राप्तवान्। तत्र दिव्यातिदिव्यरूपा विराजमाना भगवतां प्रतिमा महत्या भक्त्या प्रणम्य पुनरपि प्रियां व्याजहार। कीदृशस्वरूपा एते देवा भवन्ति?। तदनु तया निगदितम्- किं महानुभावा नैव विदन्ति? येनाहं भवद्भिः पृच्छ्ये। जितरागद्वेषारयो देवाधिदेवा एते अर्हन्तः। ततोऽसावगादीत्- प्रिये! सिंहलद्वीपे सर्वे जनाः प्रायेण बौद्धधर्मानुयायिनः सन्ति। तस्यैव प्रतिमां नमन्ति जानन्ति च, अतः कथमर्हन्तं भगवन्तमहं वेद्मि?।

ततश्च स प्रियया सहितो यात्रां विधाय पुनस्तत्रैवाजगाम। ततस्तुष्टोऽसौ विद्याधरो यात्रागताय तस्मै अनेकाः पाठसिद्धा

प्रत्यक्षफलदात्रीर्विद्या ददौ । अथान्यस्मिन् समये क्रीडाव्याजेन तां रत्नावलीं तस्मिन्नेव पद्मिनीखण्डपुरे चानैषीत् । तासां संयतिनीनां वसतिसमीपे मुक्त्वा अन्यत्रापससार । ततश्च प्रियेण वियुक्ता सा भृशं करुणापूर्णक्रन्दनं कृतवती ।

ततश्च तं श्रुत्वा तदनुसारेण सा सुव्रता गणिनी तत्रागत्य तामाश्वास्य स्ववसतिमनैषीत् । ततश्च तास्तिस्रस्तत्र मिलिताः स्वकीयं वृत्तान्तं परस्परं कथयामासुः । धर्मध्यानेनैव सुखेन कालं गमयामासुः । ततश्चैकदा अनङ्गसुन्दरी–प्रियदर्शनाभ्यां सा रत्नप्रभा विज्ञापिता– भगिनि ! कीदृशस्वरूपस्तव प्रियतमोऽस्ति किन्नामधेय इति । ततः सा प्रोचे– भगिन्यौ ! सिंहलद्वीपवास्तव्योऽनेकगुणगणालङ्कारो गुणगणैकभूमिर्बुद्धदासाभिधः कनकद्युतिर्मे भर्ताऽस्ति इति निशम्य अनङ्गसुन्दरी अकथयत्–'भगिनि ! भवत्या इयमुक्तिः सर्वमनुरूपं वदति मम पत्युः, परन्तु धर्मो निवासस्थानं नामधेयं स्वरूपं च विसंवदति ' इत्युक्त्वा सा विरराम । ततः प्रियदर्शनाऽपि जगाद–' भगिन्यौ ! अयमेव मम भर्त्ता प्रत्येति, परन्तु एतस्मिन् धर्मो निवासस्थानं च नैव मिलति ' । एवमालोचयन्त्यो भगिन्य इव तास्तिस्रः धर्माराधनदत्तचित्ताः सुखेन कालं गमयामासुः ।

इतश्च विद्याधरेण ज्ञातप्रियानिवासः कौतुकप्रियोऽसौ वीरभद्रो विहितवामनस्वरूपस्तस्मिन्नेव पुरे भ्रमति । तत्र अभिनवविज्ञानकलाशतैः सर्वान् नागरिकानरञ्जयत् । तैर्नागरिकैर्लब्धादरः सुखेनास्मिन् पत्तने तिष्ठति । अस्य पुरस्याधिपतिः ईशानचन्द्रनामा अनेककलासंयुतं तं विदित्वा महता गौरवेण स्वसमीपे स्थापयामास ।

अथान्यस्मिन् समये नृपेण श्रुतं यत् साध्वीनामुपाश्रये तिस्रो युवतयः स्वं स्वं पतिं प्रतीक्षमाणास्तिष्ठन्ति । तास्तिस्रः केनापि पुरुषेण समं नैव जल्पन्ति । किं बहुना ? परपुरुषस्य छायामपि द्रष्टुं नैव प्रभवन्ति, किं पुनर्भाषणादिकम् ? । केवलं

धर्माराधनेन साध्वीनां परिचर्यया च सर्वं स्वसमयं निर्वाहयन्ति इति श्रुत्वा आत्मजनैर्ज्ञात्वा च भूपो वीरभद्रं व्यजिज्ञपत् । 'भो वीर ! त्वमेव सर्वकलोदधिपारंगतोऽसि इति वयं जानीमः । अतः कोऽपि त्वया यत्नो विधेयो येन चेमा जल्पन्तु' इति । ततश्च तेन वामनेन किंचिद् विमृश्य स्वीचक्रे । ततश्च प्रधानपुरुषैः परिवृतो नागरिकैर्जनैर्विलोक्यमानो वामनरूपधारी असौ साध्वीनामुपाश्रयमियाय । तत्र क्षणं स्थित्वा तान् किंकरान् समकेतयत्– 'भो महानुभावास्तासां समक्षं भवद्भिर्यथेच्छं किमपि मत्तः प्रष्टव्यम्' इत्युक्त्वाऽसौ साध्वीनां सन्निधौ समागतः । महता विनयेन तासां वन्दनं विधाय सुखवार्तां च पृष्ट्वा बहिराजगाम । ततश्च नागरिकैरुक्तं भो महानुभाव ! श्रवणसुखकरं किमपि कथानकं कथय । ततश्चासौ वामनकः प्रवक्तुमुपचक्रमे । तस्मिन् समये जनानां बहु कोलाहलं श्रुत्वा अयं किं कथयिष्यति इति श्रोतुकामास्तास्तिस्रो भगिन्योऽपि साध्वीभिः समं तत्राजग्मुः । ततः स प्राह । श्रूयतां महानुभावैः प्रत्यहं चाहं राज्ञः सभायां गच्छामि, अतो यावत्कालपर्यन्तं सा वेला नैव आगच्छति, तावत्कालपर्यन्तं किमपि वक्ष्यामि । सामाजिकैरपि तथैवेति प्रतिपन्नम् । ततोऽसौ वामनकः स्वकीयां कथां वक्तुं प्रारब्धवान्– भो भोः सभ्याः ! शृण्वन्तु सावधानेन मनसा ।

एतस्मिन् भरतक्षेत्रे ताम्रलिप्तीनाम नगरी विद्यते । तत्र ऋषभदत्तनामा श्रेष्ठिवरः प्रतिवसति स्म । तस्य वीरभद्रो नाम तनयोऽस्ति । तेन अत्रत्यवास्तव्यस्य सागरदत्तस्य कन्या परिणीता, ततश्च तां प्रियां स्वगृहमनैपीत् । तदनन्तरं स वीरभद्रो देशान्तरमगच्छत् । भो भव्याः ! राज्ञः सेवाया वेला मदीया समागतेति प्रोच्य कथां विसृज्य यावदुत्तिष्ठति तावदेव भ्रान्तचित्ता प्रियदर्शना विहिताञ्जलिः सविनयं तमब्रवीत् । भो ज्ञाननिधे ! दीनवत्सल ! मयि कृपां कृत्वा 'असौ वीरभद्रः संप्र-

ति क्वास्ते ?' इति मह्यं निवेदय। ततो वामनकः जल्पति स्म। भद्रे! निजकुलकलङ्काद् भीतोऽहं कदापि कयाचिद् वनितया सह नैव भाषणं करोमि। ततो विनम्रानना सा तं प्रत्यवोचत्। सत्यमेव भवान् कथयति। अनुक्तमपि सुकुलत्वं तवेदं शीलं स्फुटमेव व्यनक्ति। उक्तञ्च—"जलप्रमाणं कमलस्य नालं, कुलप्रमाणं पुरुषस्य शीलम्" इति। तथापि स्वार्थमात्रपरायणा वयं भवन्तं भूयो भूयः प्रार्थयामः। क्वासौ गतः? कुत्र संप्रति विद्यते? इति श्रोतुकामा वयं सज्जीभूताः स्मः। ततो वामनकेनाभाणि—'यद्येवमस्ति, तर्हि श्वः कथयितास्मि' इत्युक्त्वाऽसौ तस्मात् स्थानाद् बहिर्निष्क्रान्तः। तच्छ्रुत्वा नृपोऽपि विस्मयमाप्तवान्। अथ द्वितीयस्मिन्नहनि स वामनकस्तत्रागत्य वक्तुमारब्धवान्।

ततोऽसौ वीरभद्रो नगरान्निर्गत्य केनचिद् गुटिका-प्रयोगेण स्वकीयं वपुः श्यामं विधाय इतस्ततो भूवलयं परिभ्रमन् रत्नपुरं प्राप्तवान्। तत्रापि राज्ञः कन्यामनङ्गसुन्दरीमुदूढवान्। ततो गृहं प्रत्यागच्छतोस्तयोर्यानं प्रभग्नम्। इत्युक्त्वा यावदेव गन्तुमिच्छति स्म, तावदेव सा अनङ्गसुन्दरी हस्तौ नियोज्य साग्रहं तमपृच्छत्—'भो महानुभाव! इदानीं स वीरभद्रः कं भूमिभागमलङ्करोति? इति ममोपरि कृपां कृत्वा कथय'। ततो वामनकेनाभ्यधायि। तस्य समाचारं श्वो वक्तास्मि। ततस्तृतीयदिवसे स वामनोऽब्रवीत्। तस्मिन् प्रवहणे भग्ने सति स वीरभद्रो विहितनिजसहजस्वरूपो रतिवल्लभेन विद्याधरेण विलोकितः। तुष्टः स स्वगृहमनैषीत्। ततश्च रतिवल्लभेन रत्नप्रभानाम्नी स्वतनया तेन सह परिणायिता। ततश्च तां प्रियामादाय स स्वपुरं प्रति व्रजन्नस्मिन्नेव पुरे साध्वीनामुपाश्रय-समीपे तां मुक्त्वा क्वापि जगाम। ततो रत्नप्रभाऽपि तमापृच्छत्—'भो महाभाग! ममोपरि कृपां कृत्वा कथय क्वास्ते स वीरभद्रः?'। ततोऽसौ प्रोचे—'श्वः

गदितास्मि' इत्युक्त्वा ततो निस्ससार। ततश्चतुर्थेऽह्नि तास्तिस्रो निश्चिक्युर्यदस्माकमेक एव भर्ताऽस्ति, परन्तु स इदानीं क्वास्ते इति वयं नैव जानीमः। ततोऽसौ भगवान् कुम्भगणधरः तं सागरदत्तश्रेष्ठिनं प्राह-' श्रेष्ठिन्! अयमेव वामनकस्तव जामाताऽस्ति, तासां तिसृणां कन्यानां प्राणवल्लभो भर्त्ता, परन्तु क्रीडया ताभ्यो विरहं ददाति।' इत्थं मुनिनोपदिष्टं स्ववृत्तान्तं श्रुत्वा असौ वीरभद्रो गणधरस्य पादमूले निपत्य प्रोवाच-'भगवन्! एतस्मिन् संसारे किमपि चेदृग् वस्तु नास्ति, यद् दिवाकरेणाप्रकाश्यमस्ति, तथैव करामलकवत् सर्वं विश्वं भवान् वेत्ति'। ततश्च सागरदत्तश्रेष्ठी विनयेन तं मुनिवरं प्रणम्य तं वामनमादाय साध्वीनामुपाश्रये गत्वा तस्य सर्वमुदन्तजातं गणधरेणोक्तं तासां पुरो मूलतो वर्णयामास, अब्रवीच्च-'भो भद्राश्चिरायुष्यो! भवतीनामयमेव प्राणवल्लभः' इति। ततश्च कृतसहजस्वरूपोऽसौ वीरभद्रः तं श्रेष्ठिनं ताश्च तिस्रः प्रिया भृशमानन्दयामास। तदनन्तरं सा भगवती आर्या तान् सर्वान् धर्ममुपदिशति स्म। भो भो भव्याः! अस्मिन् संसारे पुण्यमेव सारं विदांकुर्वन्तु भवन्तः। तदेव सर्वान् जनान् सर्वत्र रक्षति।

उक्तञ्च—"वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि॥ १॥"

विशेषतः सुपात्रदानेनैव जनाः सर्वर्द्धिं प्राप्नुवन्ति। 'दानेन उत्तमा भोगाः' इति वचनात्। अनुमीयते चास्माभिर्यद् भवान्तरे चानेन भावपुरस्सरं कस्मैचित् सुपात्राय दानं दत्तमिति। अस्मिन् विषये भगवन्तं श्रीअरनाथं प्रक्ष्यामः। ततोऽनन्तरं सपरिकरो भगवानन्यत्र विजहार। तस्मिन् पुरे अन्यदा कदाचित् समवसृतं तमरनाथं प्रभुं श्रुत्वा सर्वे जनास्तत्रागत्य तं

प्रणेमुः । ततः प्रस्तावं प्राप्य पप्रच्छुः–'भगवन् ! अनेन वीरभद्रेण भवान्तरे किं सुकृतं कृतं येनेदृशी ऋद्धिः समासादिता ?' । ततोऽसौ ज्ञाननिधिः प्रभुर्व्याजहार । इतस्तृतीये भवे वत्सनाम्नि विजये अहं धनपतिनामा नृपोऽभवम् । ततो गृहीतदीक्षो विहरन्नहं रत्नपुरं प्राप्तवान् । तत्र महर्द्धिकः सर्वेषां मध्ये प्रधानो जिनदासनामा श्रावकः सर्वदैव धर्माराधन–दत्तचित्तः प्रतिवसति स्म । स च समागतं मां विलोक्य चातुर्मासिकपारणावसरे प्रसन्नमना भूत्वा मत्समीपमुपाजगाम । तिस्रः प्रदक्षिणाः कृत्वा त्रिकरणविशुद्ध–भावेन मां मुनिरूपं ववन्दे । महता विनयेन महन्निधानमिव स्वभवनं मामनैपीत् । सपरिजनो मत्पादमूलं निपत्य मनसि चैवं विभावयामास । धन्योऽहं यदयं राजर्षिपुंगवो मम गृहे समागतः । किमद्य मम गृहे कल्पपादपोदयो जातः ?, अथवा मम करतले चिन्तामणिः संप्राप्तः ?' इति शुद्धां भावनां भावयन् शुद्धेन अन्नादिना प्रतिलाभ्य स्वकीयं जन्म जीवितं च सफलयामास ।

तस्मिन्नेव समये नभसः पञ्च दिव्यानि प्रादुर्भूतानि । तस्मिन्नेव क्षणे सर्वैः सुरासुरखेचरैर्धन्यमिदं सुपात्रदानं धन्यमिदं सुपात्रदानमिति शब्दैर्नभस्तलं पूरितम् । तत्र प्रमुदितमनोभिर्नरपतिप्रमुखैः सर्वैरेव जनैः स श्रेष्ठी प्रशंसितो जातः । तेनैव सुपात्रदानप्रभावेणासौ जिनदासो देवानामायुष्यं बबन्ध । अहं च तत्राराधितैः कैश्चिच्छुभस्थानकैः प्रतनूकृतसंसारः तीर्थकृद्–गोत्रं समुपार्ज्य नवमे ग्रैवेयके महर्द्धिको देवोऽभवम् । तत्र स्वायुष्यं पूरयित्वा ततश्च्युत्वा हस्तिनापुरे नृपाणां शेखरस्य सुदर्शननाम्नो भूपस्य देवीनामपट्टमहिषी–कुक्षिसंभवः स एवायमरनाथ इति नाम्ना लोके प्रसिद्धोऽभवम् । असौ जिनदासश्रेष्ठ्यपि चिरकालं गृहस्थधर्मं परिपाल्य स्वायुष्यं पूरयित्वा अन्ते ब्रह्मलोके महर्द्धिकः सुरो जातः । ततश्च्युत्वा

भरतक्षेत्रे कम्पिलपुरे कस्यचिदिभ्यस्य श्रद्धावान् तनयो जातः । तत्रापि विविधान् भोगानुपभुज्य सम्यग्गृहस्थधर्मं परिपाल्य च द्वादशकल्पे भासुरको नाम देवोऽजनि । ततश्च्युत्वा पूर्वसंचितपुण्यानुबन्धिपुण्यप्रभावेण स एव जिनदासश्रेष्ठिनो जीवो वीरभद्रोऽभवत् । इति मूलतस्तस्योत्पत्तिर्मुनिना वर्णिता । इत्थं गुरुणोपदिष्टं निजपूर्वभवं श्रुत्वा वीरभद्रो गुरुचरणौ नमस्कृत्य प्रोवाच । पूज्यपादैर्यत् प्रोक्तं तत् सर्वं सत्यमेवाहं मन्ये । ततोऽसौ सकलत्रो गृहस्थधर्मं प्रतिपद्य तेन श्रेष्ठिना सह तस्य भवनं जगाम । ततश्च भगवानपि क्वापि विजहार । ततश्च जननी-जनकदर्शनोत्सुकोऽसौ वीरभद्रः श्वशुरवर्गमापृच्छ्य तिसृभिर्भार्याभिः सहितः प्रवरविमानमधिरुह्य ताम्रलिप्तीं प्रति प्रतस्थे । शीघ्रमेव तां पुरीमासाद्य तस्माद् विमानात् स्वयमवततार । एवं स्वागमनेनानन्दितसकलपरिजनः सभार्यः स जननीं जनकं चानन्दयामास । इत्थं पूर्वोपार्जितपुण्यप्रभावेण चेह विविधान् भोगान् भुक्त्वा चिरकालपर्यन्तं विशुद्धं श्रावकधर्मं परिपाल्य च समये संविग्नमनाः कस्यचिद् गुरोः पार्श्वे भागवतीं दीक्षां जग्राह । ततश्च चिरकालं निष्कलङ्कं चारित्रं परिपाल्य अन्ते समाधिना मृत्वा सुरलोकं प्राप्तवान् । तत्रापि दिव्यान् भोगानुपभुज्य क्रमेण चारित्रं प्राप्य मोक्षं गमिष्यति । इति सर्वं कथानकं मुनिर्वर्णयामास ।

हे भद्रे ! त्रिविधोऽपि दानधर्मो मया सम्यक् कथितश्चेदानीं विहितशिवसुखलीलं शीलं सावधानमनसा शृणु । यथा गरुडं वीक्ष्य सर्पैर्विलीयते, तथैव शीलेनैव सर्वे दोषौघा विलयं यान्ति ।

"नियकुल-नहयलममलं सीलं सारयससि व्व धवलेइ । सीलेण य जंति खयं खिप्पं सव्वे वि दुरियगणा ॥ १ ॥

जाइ-कुल-रूव-बल-सुय-विज्जा-विण्णाण-लच्छि-रहिया वि । सव्वत्थ पूयणिज्जा निम्मल-सीला नरा लोए ॥ २ ॥

जाइ-कुल-रूव-बल-सुय-विज्ञा-विण्णाण-लच्छि-सहिया वि । पावंति नेव ठाणं सवत्थ वि सील-पब्भट्ठा ॥ ३ ॥
लब्भइ सीलेण कुलं सीलं न कुलेण पायडं होइ । तम्हा सीले सिवसुह-निबंधणे आयरं कुणह ॥ ४ ॥
तं पुण सीलं दुविहं देसे सव्वे य होइ नायव्वं । देसे गिहीण दंसण-मूलाणि दुवालस वयाणि ॥ ५ ॥
साहूण सव्वसीलं सीलंगट्ठारससहस्सा जं । बुज्झंति निरइयारा जावज्जीवं अविस्सामं ॥ ६ ॥
ता कायव्वा भत्ती साहूण विसुद्धसीलवंताणं । नियसत्तीए य तहा पालेयव्वं सया सीलं ॥ ७ ॥
तत्थ वि उस्सग्गेणं सुसावओ धरइ निम्मलं सीलं । पालइ पव्वदिणेसु च काऊण सदारसंतोसं ॥ ८ ॥
अहवा वि ससत्तीए एगेगविहायभेयपडिभिण्णं । नरयपुर-निविड-दारं परदारं चयह पुण निच्चं ॥ ९ ॥
लहुकम्मा गुरुसत्ता पवित्तसीला कलावइ व्व जिया । पावंति पुण्णवंता कित्तिं च सुहं च सुगइं च ॥ १० ॥"
पालयन्ति निजं शीलं, शुद्धं या ललना भुवि । कलावतीव ताः सौख्यं, प्राप्नुवन्त्यपवर्गदम् ॥

ततश्च सुदर्शनया स मुनिर्भूयः पृष्टः- हे प्रभो ! करुणानिधान ! सा कलावती का ? केन प्रकारेण सा शीलमपालयत् ? । यस्य प्रभावेण कीर्ति-सुगतिसुखानि तया समासादितानि । तदनन्तरं स मुनिप्रवरो व्याजहार ।

अस्मिन् जम्बूद्वीपे भरतक्षेत्रे श्रीनिवासे श्रीमङ्गलाख्यदेशे शंखोज्ज्वलगुणगरिम्णा विराजितम्, अपरं रमानिवासमिव शङ्खपुरं नाम नगरं विद्यते। तच्च पुरं प्रबलप्रतापो विदलितारिवर्गोऽगणितगुणगणालङ्कृतः शंखनामा नरनाथः परिपालयति स्म ।

अथान्यदा आस्थानस्थितस्य तस्य नृपतेः सभामण्डपं गजश्रेष्ठिसुतो दत्तः संप्राप्तवान् । ततोऽसौ तत्र स्थितं द्वाःस्थं

प्राह–'भो दौवारिक ! भूपतिं द्रष्टुमहमागतोऽस्मि । ततो दौवारिको राज्ञे तन्निवेदितवान् । तेन प्राप्तानुज्ञः स श्रेष्ठितनयो नृपोपान्तं गत्वा नरनाथं प्रणनाम । ततः स्वोचितस्थानस्थिते तस्मिन् राजा सस्नेहं तं पप्रच्छ–' भद्र ! केन कारणेन चिराद् दृष्टोऽसि ? ' । ततोऽसौ दत्तोऽब्रवीत्-' भो राजन् ! दिक्षु यात्रायै गतोऽहं, तां विधाय अद्यैव गृहाय निवृत्तः । ततो भूपतिना जगदे–' भो दत्त ! तत्र किं त्वया किमपि विस्मयप्रदं वस्तु विलोकितम् ? ' । ततोऽसौ चचक्षे–' हे भूजानिवर ! सर्वाऽपि मही आश्चर्यपूर्णा एव वर्तते ।

" यो न निर्गत्य निःशेषामालोकयति मेदिनीम् । एतामाश्चर्यसंपूर्णां स नरः कूपदर्दुरः ॥ "

इतोऽहं निर्गत्य समस्तभूवलयं परिभ्रमन् क्रमेण देवशालपुरं प्राप्तवान् । तत्र मया यानि राजकीयानि विस्मयकराणि वस्तुजातानि विलोकितानि मया नैव वक्तुं शक्यन्ते । इत्युक्त्वा वस्त्रपरिवेष्टितमेकं चित्रफलकं महाराजाय तेन उपायनीकृतम् । तच्चित्रफलकं बहुकालं सावधानेन मनसेन्द्रियैश्च विलोक्य नृपो दत्तं प्रत्युवाच–' मित्र ! कथय केयं देवी किन्नामधेयमस्याः ? ' ततो दत्तोऽब्रवीत्– ' नरनाथ ! नैवेयं देवी, किन्तु मानवी एवैषा ' । ततो भूपतिना भणितम्– केयं कन्या ?, किमस्या अभिधानम् ? ' । ततो दत्तोऽगदत् । इयं कलावतीनाम्नी मम भगिनी । ततो राजा व्याजहार–' तर्हि कथं तव अनया सह भ्रातृसम्बन्धः ? ' । ततो दत्तः प्राह–' राजन् ! सार्थेन सह व्रजन्नहं चौरशङ्कया मार्गशोधनार्थं यावत् कस्मिंश्चिद् विपिनेऽव्रजम्, तावदेव पथि निपतितो मृततुरगपृष्ठोपरिस्थितो निर्गतचेतनः सुरकुमार इव कण्ठागतप्राणः कश्चिन्नरो मम दृष्टिगोचरो जातः, तथाविधं तं विलोक्य संजातभक्तिभरोऽहं पवनसंचारेण पयःपानेन च विविधविधिसेवया

तं प्रकृतिस्थमकरवम् । ततश्चाहं तमपृच्छम्–' सखे ! कुतस्त्वमागतोऽसि ?, केन कारणेन त्वमीदृशीमवस्थां गतः ? '। ततोऽसौ कुमारः प्राह–' भोः कारुणिक ! अहं देवशालपुरवास्तव्यनृपस्य तनयोऽस्मि, विपरीतशिक्षितेनानेन तुरगेणात्राहं तस्मान्नगरादानीतोऽनेनैव चाहमीदृशीं दशां गमितश्च । यूयं कथयत, कुतो भवन्त आगतवन्तः ?, क्व गमिष्यथ ? ' इति । ततो दत्तो जगाद–'अहं शङ्खपुरादागतोऽस्मि, देवशालपुरं च गमिष्यामि, ततोऽसौ कुमारो निजपुरगामिनं तं ज्ञात्वा भृशं वागमृतेन तुतोष । ततो द्वावपि प्रवरसुखासनस्थौ सार्थेन सहैव अग्रे यावद् गच्छतस्तावदेव चतुरङ्गसैन्यं प्रेक्षयामासतुः । तत्सैन्यं विलोक्य यावत् सर्वे सार्थस्य जनाः क्षुभ्यन्ति, तावदेव केनचिद् बन्दिना प्रोक्तम्–' विजयमहाराजस्य तनुरुहो जयसेनकुमारो विजयतेतराम्, विजयतेतमाम् ' । तावत् कुमारः ससैन्यं निजपितरं विलोक्य सुखासनादवतीर्य तातस्य चरणौ प्रणनाम ।

जनकावलोकनेन संजातातिहर्षः कुमारो जनकं प्रति प्राह–' तात ! सत्पुरुषशेखरेण दत्तनाम्नाऽनेन सार्थवाहेनाहमद्य जीवितः ' इति निशम्य भूपतिना प्रोक्तम्–' हे निजकुलावतंस ! अद्यप्रभृति त्वमेव मम प्रथमपुत्रोऽसि ' इत्युक्त्वा तं सार्थसंघं निरुजं विधाय, तेन सार्थपतिना सह स दत्तः राज्ञा स्वपुरं नीतः । तदनन्तरं तेन राजकुटुम्बेन तथा मम हृदयमार्द्रीकृतम्, येन जननी–जनकौ भ्रातृवर्गो निजदेशो नागरिकजनाश्चेति सर्वं मया विस्मृतम् ।

अवि य– "ते केइ मिलंति महीयलम्मि लोयण–महूसवा मणुया । हिययाओ खणं पि न ओसरंति जे टंक–घडियाओ ॥"
तस्य राज्ञः श्रीदेवी–कुक्षिसमुद्भवा विनयादिसकललक्षणलक्षिता ललनाललामलतिका कलावती नाम एका कन्याऽस्ति ।

या खलु जयसेनकुमारस्य अनुजा, अपि च सा सर्वातिरेकेण रूपेण तुलिततिलोत्तमा, कलाकौशलेन च त्वष्टारमपि विलज्जयन्ती भ्रूविभ्रमादिभिर्जनानां मनांसि अनुरञ्जयन्ती कलावती इति अन्वर्थनाम्ना प्रसिद्धाऽभूत् । सा चेदानीं संप्राप्तवयस्का अतस्तस्या अनुरूपो वरो भूपतिना सर्वप्रयत्नेन सर्वत्र मार्गितस्तथापि नैव समासादितः, अतस्तच्चिन्तानलेन राज्ञः तत्पुत्रजयसेनस्यापि हृदयं भस्मसात्कृतमिव प्रतिभाति । अथैकदा ताभ्यामहं विज्ञापितः–' भद्र ! अस्या योग्यो वरस्त्वयाऽपि मार्गणीयः, यतो रत्नैः परिपूर्णा वसुन्धरा, अपरञ्च भवताऽपि बहवो देशा विगाहिताश्च ' एवं तयोर्गदितमाकर्ण्य मयाऽपि तस्याः प्रतिकृतिश्चास्मिन्नेव चित्रफलकेऽलेखि । तच्चित्रफलकं यत्नेन गृहीत्वा ततश्चाचलम् । कल्य एव स्वभवनमागच्छम् । अतश्चानेकशश्चिन्तया मया हृदि इदं स्थिरीकृतम्– ' यदिदं युवतिरत्नं मन्नाथस्य योग्यमस्ति ' यतः सार्वभौमं स्वस्वामिनं मुक्त्वा को जनश्चेदृग् स्त्रीरत्नमन्यस्मै दापयेत् ?, यतो महागिरिसमुद्भूतानां निम्नगानां केवलं पाथोधिरेव स्थानं भवति । तथैव निशाकरं मुक्त्वा नैव कदापि ज्योत्स्ना कमप्याश्रयते । इत्थं मनसि विभाव्य लोके निरुपमरूपायास्तस्याः किंचिद् रूपं भवन्तमदर्शयम् । अतः परं पूज्यपादानामादेश एव प्रमाणम् ' । एवं तदुक्तमाकर्ण्य चित्रफलकचित्रितां तां चिरकालमेकाग्रमनसा नृपो विलोकयँस्तस्यां जातानुरागोऽलक्ष्यत । सात्त्विकरोमोद्गमेन समुत्पन्नवेपथुर्वातुल इव तां विलोकयन् यावत् तिष्ठति, तावदेव कालप्रतिबोधकेन प्रोक्तम्– ' नरनाथ ! वर्धिततेजसां प्रसरो दिवाधिनाथः संप्रति सर्वेषां जनानां मौलिमाक्रामति ' इति । तेन राज्ञाऽनुमितं यद् मध्याह्नकालो जात इति ।

राजाऽपि ततः तां सभां विसृज्य तामेव मनसि ध्यायन् स्वभवनमगात् । दत्तोऽपि तस्यां राज्ञोऽनुरागं तथाविधं विलोक्य

ततो देवशालपुरमागत्य सर्वं वृत्तान्तं विजयभूपाय निवेदयामास। ततो विजयनृपः शंखनृपस्य स्वतनयां प्रति तथाविधमनुरागं विज्ञाय चतुरङ्गसैन्यसंयुतां निजतनयजयसेनेन सह कलावतीं शंखपुरीं प्रति प्रस्थापयामास। सोऽपि निरन्तरप्रयाणकैः शीघ्रमेव शंखपुरं प्राप्तवान्। ततश्च शंखनृपः चतुरङ्गसैन्यपरिवेष्टितं निजपुरं विज्ञाय रोषारुणितलोचनः संक्षुब्धमना द्रुतमेव संग्रामाय सज्जीभूय यावदश्वमभ्यारोहति, तावदेव दत्तो गत्वा राजानं वर्धापयामास। अपृच्छच भूपवरेण्य! अकाण्डावसरे कुतोऽयं संग्रामसमारम्भो लक्ष्यते?। ततोऽसौ शङ्खः प्रोवाच–'सखे! केनापि प्रबलरिपुणा स्वकीयसैन्यैरियं पुरी सर्वतोऽवरुद्धा, किं भवता नैव विलोक्यते?, येन रणस्यानवसर इति भण्यते'। ततो दत्तोऽवोचत्–'राजन्! नायं तवारिः, किन्तु भावी तव सम्बन्धी एव। तथाहि मया चित्रफलकदर्शितम्, तदेव स्त्रीरत्नमधुना भवन्तं वरीतुं स्वत एव आगच्छति। तस्य स्त्रीरत्नस्य रक्षार्थं तस्या अग्रजो दिक्षु विस्तारिकीर्तिप्रभापटलो रूपेण न्यक्कृतमनोभवः संप्राप्तसंपूर्णकलानिधि–जलधिपारः कुमारो जयसेनोऽपि पित्रा प्रेषितस्तामेव स्वभगिनीं परिणाययितुं ससैन्य आगच्छति'। तच्छ्रुत्वा मुदितमना महीपतिः स्वाङ्गे परिधृतं सर्वमेवाभरणजातं कनकमयीं जिह्वामपि दत्ताय दत्त्वा प्रोवाच–'भोः सखे! नैवाहं वेद्मि प्राक्तनेन केन पुण्यप्रभावेणेदानीमतिदुर्घटमपि कार्यं शीघ्रमेव सुघटितं कृतम्'। अत्रैव कैश्चिद् विद्वद्भिरुक्तम्—

"अघटितघटितानि घटयति सुघटितघटितानि जर्जरीकुरुते। विधिरेव तानि घटयति यानि पुमान् नैव चिन्तयति।"

ततः स्मेराननो दत्तोऽन्ववोचद्–'राजन्! अचिन्त्यप्रभावो विधिर्भवति, स एवानुकूलः प्राणिनां सर्वाणि कार्याण्यनुकूलयति। अस्मिन् विषये किमधिकं वक्तव्यम्? अनुकूलो हि विधिः साक्षात्कल्पद्रुरेव कथ्यते जनैः। ततश्च भूपतिना सप-

रिकरा सा कलावती महत्या विभूत्या स्वपुर्यां प्रवेशिता। अनेकसौधपरिपाटिविराजमानं सौधं दत्ताय दत्तवान्। अन्येषामपि यथोचितं सत्कारं कारयामास। ततश्च दैवज्ञानापृच्छ्य तैर्निर्दिष्टे समये महता समारोहेण तां तरुणीं शंखः परिणीतवान्। तस्मिन् समये लक्ष्मी–नारायणयोरिव पाणिपीडनमहोत्सवो जनैः सस्मरे। तदनन्तरं जयसेनकुमारो राज्ञो बहूवादरेण कतिचिद् दिनानि तत्र स्थित्वा पश्चात् तेन प्राप्तानुज्ञो लब्धादरः स्वपुरं प्रति सपरिजनो निवर्तयामास।

ततः शची–शक्रसमानयोस्तयोः कलावती–शंखयोः सांसारिकविषयेषु अतीवानुरागोऽजायत। नृपश्च क्षणमपि तद्विरहं सोढुं नैव शक्नोति स्म। निजप्राणानिव तामेव मन्यमानोऽनेकानन्दजनककथाभिः सुखेन कालं गमयामास। किमधिकं सभास्थानस्थितोऽपि आत्मानं तस्याः पार्श्वस्थमेव मन्यते। एवं तस्या वशं गतो येन हस्त्यश्वादीनां क्रीडामपि प्रत्यवायमेवाङ्गीकरोति। किं बहुना? कारणवशाद् व्यावहारिकाणि राजकीयकार्याणि कुर्वन्नपि शरीरमात्रेणैव तत्रावतस्थे, मनसा अन्तर्वृत्त्या तु तत्रस्थ एवेति। किमधिकं निगद्यते? सर्वमप्यन्तःपुरं कलावतीमयमेव राजाऽमन्यत। ततश्च कलावत्या आकाशवद् विशालमपि तस्य राज्ञो मनस्तथाऽरुन्धि, येन अन्याः काश्चिदपि अबला नैवावकाशं लभन्ते स्म तत्र। सा कदाऽप्यनृतभाषणं नैव कुरुते। अन्येषां दोषान् नैव मनसा विभावयति। कस्याप्युदयं विलोक्य नैव ईर्ष्यति। आत्मीयगुणान् नैव श्लाघते। सर्वदैव प्रियं वक्ति, अभयदानं च ददाति। तथा निजपत्युरनुवृत्तिं कदापि नैव जहाति। निरुपमरूपादिगुणैराकीर्णा सा त्रिकरणशुद्धभावनया सदैव शीलमनुपालयति। तस्यास्तादृक्शीलानुशीलनं वीक्ष्य देवा अपि विस्मयपाथोधौ निमग्नाः। अथैवं बहुकाले व्यतिक्रान्ते सति एकस्यां रात्रौ प्रसुप्ता सा एवं स्वप्नमपश्यत्–यत् सर्वगुणपरिपूर्ण एकः कनकमयः कलशो

मदीयोत्सङ्गे निपपात। ततश्च तस्मिन्नेव क्षणे प्रतिबुद्धा सा भूपतिपार्श्वे गत्वा तं स्वप्नं निवेद्य तस्य फलं पप्रच्छ। नृपोऽपि मुदितमना भूत्वा प्रियां व्याजहार–'प्रिये! एतस्येदमेव ध्रुवं फलमस्ति, यत् त्वदीयकुक्षितः सर्वलक्षणलक्षितः प्रधान-पुरुषस्तव तनयो भविष्यति' इति। इत्थं स्वप्नफलं श्रुत्वा सा प्रफुल्लहृदया पूरितसकलदोहदा सुखेन तं गर्भं बभार। ततश्च सगर्भां निजतनयां ज्ञात्वा 'कन्यकानां प्रथमः प्रसवः जनकस्य गृहे एव भवति' इति नियमेन तस्याः पिता निजप्रधानपुरुषांस्तस्या आनयनार्थं शंखपुरे प्रेषयामास। तैः सह प्रभूतानि प्राभृतकानि बहुमूल्यवस्त्रादीनि राज्ञे कलावत्यै च दातुं प्रेषितानि। जयसेनश्च अनेकरत्नखचितमङ्गदयुगलं प्रेषयामास। तं वस्तुसंभारमादाय ते पुरुषाः पूर्वं दत्तश्रेष्ठिगृहे गतास्ततश्च दत्तो विलोक्य ससम्भारान् तान् पुरुषान् नृपभवनमनैषीत्, परन्तु प्रफुल्लनेत्रास्ते सर्वे राजानं तत्रानवलोक्य आनीतानि प्राभृतकानि कलावत्यै समर्पयामासुः। साऽपि तानि वस्तुजातानि विलोक्य परममानन्दमाप। चिरकालेन समासादितं जननीजनकसमाचारं च श्रुत्वा झटिति हर्षरोमाञ्च–कञ्चुकित–शरीरा जाता। आह च–'स्वागतं भवतां, पूज्यपादानां तातपादानां कुशलं कथयत। अपि च रोगनिर्मुक्तदेहा मदम्बा कुशलिनी आस्ते?। मम श्रेयान् भ्राताऽपि सदैव मोदमानो विराजते?' इत्थं पृष्टे सति सर्वेऽपि जनाः सहैव सविनयमोमित्याहुः।

ततश्च ते प्रोचुः– 'भद्रे! त्वद्दर्शनोत्सुकानां सर्वेषामेव जननी–जनक–बन्धुवर्गाणामजस्रमेव कुशलमास्ते'। ततश्चातीव भ्राजमानं तदङ्गदमिथुनं विलोक्य दत्तोऽतिनिबन्धेन स्वप्रियार्थं तेभ्यो ययाचे, तथापि नैव तस्मै तदङ्गदयुगलं ते ददुः। कलावतीं ते विज्ञपयामासुः– देवि! अदो वस्तुजातं राज्ञे दातव्यमिति महाराजेन प्रोक्तमतस्तस्मै वयं दातुं गच्छाम इत्युक्ते

सति सा प्राह–'भद्राः! स्वत एवाहं तस्मै समर्पयिष्यामि' इत्युक्त्वा सर्वमेव प्राभृतकं तया जगृहे। अमन्दादरैराद‍ृतास्ते सर्वेऽपि प्राप्तपारितोषिका दत्त–भवनं प्रति निवृत्ताः। ततोऽसौ कलावती भ्रातृस्नेहेन अतीवमनोहरत्वेन च निजभुजलतयोर्मध्ये तदङ्गद-युगलं परिधाय अत्यादरेण तयोः शोभां विलोकयामास। तद् विभावयितुं यावत् प्रवृत्ता तावदेव राज्ञीभवनसमीपे कुतोऽपि परिभ्रमन् भूपोऽपि समाजगाम। हर्षप्रकर्षेण हसन्त्यास्तस्याः शब्दमाकर्ण्य वातायनस्थो भूपः सखीनां मध्येऽनुपमेन अङ्ग-देन विराजमानं तस्या भुजलताद्वयममन्दविस्फारिनेत्राभ्यां निभृतं विलोकयामास। प्रियायाः प्रियशब्दं चाश्रौषीत्। सा कलावती सखीः प्रति प्राह–'सख्यः! स्नेहिना प्रेषितमिदमङ्गद–युगलं विलोकयन्ती चाहं पीयूषसिञ्चिता कल्पवल्लीव अनेन चात्मनो नेत्रे अभिषिञ्चामि। अथवा किमनेन ?; एतद् विलोक्य साक्षात् तमेव विलोकयामि' इत्यहं मन्ये। अस्य चेदृक् सौन्दर्यं वीक्ष्य परमप्रेमास्पदेन श्रेष्ठिसूनुना दत्तेन मार्गितमपि तैः प्रधानपुरुषैर्मदनुरागवशंवदैस्तस्मै नैव दत्तम्। ततः सखीभि-रुक्तम्– 'स्वामिनि! त्वमेव तस्य बहिश्चराः प्राणा इवासि। यतस्त्वयि याद‍ृक् तस्य स्नेहप्रसरस्ताद‍ृक् कुत्रापि नास्ति' तदा इत्थमगृहीतनाम्ना राज्ञ्याः तेषां सखीजनानां च वचनं श्रावं श्रावं कोपादिना दंदह्यमानो नृपश्चिन्तयामास–'अहो! अस्या हृदयं चान्यस्मिन्नेव वल्लभे विलग्नमस्ति, मद्विषये तु कपटस्नेहेनैव व्यवहरति' इति अधुना स्पष्टं जातम्। अहो! यस्येद‍ृशी दुरात्मा भार्याऽस्ति, तेन पुरुषेण शीघ्रमेव गृहं त्याज्यम्। किं करोमि ?, क्व गच्छामि ?, यदि चैनामेव स्वकोपो-पशमनाय निहन्याम्, तर्हि स्त्रीवधपातकं मां स्पृशेत्। इत्थं प्रवृद्धज्वलनज्वालावलिग्लपितशरीरः स नृपो विलक्षवदनः कथं कथमपि तस्मात् स्थानात् स्वस्थानमगात्। ततश्च कांचित् क्रूरकर्मकारिणीं मातङ्गभार्यामाहूय भूपः प्रच्छन्नं यथा स्यात्तथा

तामशिक्षयत्। अपरञ्च निष्करुणमनसा निष्करुणनामानं निजसुभटं व्याजहार–'भो निष्करुण! प्रत्यूषे कलावतीं राज्ञीं कस्मिंश्चिद् भयंकरे विपिने केनापि मिषेण नीत्वा तस्या हस्तावाच्छिद्य मुञ्च' इति राजा तं शिक्षयामास। सोऽपि तथैव प्रतिपद्य गतः। अथ प्रभातसमये रथं सज्जीकृत्य शीघ्रमेव तत्रागत्य देवीं व्याजहार–' भद्रे! महाराजो गजमारुह्य अस्मिन्नेव कुसुमोद्याने गतो भवतीमानेतुं मां प्रेषितवान्, शीघ्रमेव अस्मिन् रथे निविश्यताम्' इत्थं तेन विज्ञपिता सरलस्वभावा सा कलावती ससंभ्रमं तूर्णमेव सज्जीकृतस्यन्दनमध्यतिष्ठत्। ततस्तेन प्रेरितौ पवनातिपातिनावश्वौ क्षणमात्रेणैव बहुभूमिभागानतिचक्रमतुः। ततः कलावती तं प्रोवाच–सारथे! बहुमार्गमतिक्रान्तो रथः, क्वास्ते महाराजः?'। ततोऽसौ चचक्षे–' भद्रे! एष पुरो गच्छति' एवमसत्यभाषणेन तां प्रतार्य शीघ्रमेव सर्वसत्त्वभयावहां काञ्चिन्महतीमटवीं प्राप्तवान्। तत्रास्तमुपागते दिवाकरे अभिव्यज्यमानां विभावरीं विलोक्य नृपञ्च तत्रानवलोकयन्ती सखेदं सा मृगशावाक्षी कलावती भूयस्तमब्रवीत्–भो भद्र! बहुभिश्चाटुवचनैस्त्वयाऽहं विप्रलोभिता। नेदं कुसुमोद्यानं, नैवात्र जनाधिनाथो, न चापि तूर्यरवः श्रूयते, न वा जनानां कलरवः, किन्तु घोरतोऽपि घोरतरं जनैर्विहीनं कण्टकद्रुमैराकीर्णं विजनविपिनमिदमस्ति। अहो! किं मे बुद्धिभ्रमो जातः?, किं वाऽहं स्वप्नं पश्यामि?, अथवा इयं शाम्बरी माया, किन्तु वैन्द्रजालिकमिदमिति विविधान् विकल्पानकरोत्। अपि च स्वभावतः कोमलहृदया युवतयो भवन्ति। इत्थं हृदयविदारिणीं विपदं विमृश्य त्यक्तधैर्या सा भृशं विललाप। तस्या रोदनेन निष्करुणोऽपि सकरुणः करुणारसे निममज्ज। ततो रथादवतीर्य विहिताञ्जलिर्नेत्रधाराभिरभिषिच्यमानवदनः स कथं–कथमपि तस्याः प्रत्युत्तरं दातुं शशाक–'हे देवि! एतस्मिन् संसारे मत्तोऽन्यः कोऽपि नैव पापात्माऽस्ति इति विदां-

कुरु। यतो विधात्रा ईदृक्क्रूरकर्मणि अहं नियोजितः, किमधिकं वच्मि ?, निष्फलं सदैव पापमयं मम जीवनं व्यतिक्रामति, दुरन्तपूरोदरदरीनिमित्तं यद् यदपि दुष्कृतं स्वामी कथयति, तत् सर्वमपि सहसा शीघ्रमेव करोमि। स्वामिनि! त्वमपि अस्माद् रथादवतीर्य अस्यां निविडच्छायायामुपविश, अयमेव राज्ञा आदेशः कृतः। अन्यद् यदुक्तं तत्तु मनसाऽपि नैव स्मर्तुं योग्यं, किं पुनर्वक्तुमिति'। ततः सा कलावती विद्युन्निपाततोऽप्यधिकदुःखकरमश्रुतपूर्वं तद्वचनं निशम्य रथादवतरन्ती मोहवशेन मूर्च्छिता सती भूमौ निपपात। निष्करुणोऽपि बहु विलपन् रथमारुह्य शङ्खपुरं प्रति प्रतस्थे। इतश्च कलावती शिशिरोपचारिणा पवनेन कथञ्चिल्लब्धचेतना अत्युच्चैर्विलपन्ती सती जननी-जनकौ तद्भवनं च स्मरन्ती तिष्ठति, तावदेव करालवदना सर्वतो विकीर्ण-शिरोरुहा अतितीक्ष्णकृपाणहस्ता प्रलयकालिकचण्डरवा चण्डिका इव काचिच्चाण्डाली तत्रागत्य क्षते क्षारवत् प्रोवाच- पापे! दुश्चरित्रे! अविमृष्यकारिणि! भुङ्क्ष्व तावत् स्वकृतकर्मणां फलमित्युक्त्वा तीक्ष्णया क्षुरिकया अङ्गदयुगलसहितं तस्या भुजयुगलं चिच्छेद। ततोऽसौ कलावती छिन्नाभ्यां भुजाभ्यां पर्वतेभ्यस्तोयधारामिव रुधिरधारां निपातयन्ती तारस्वरेण 'हा तात! हा जननि! हे भ्रातः! किमिदं विपरीतं जातम्?' इति विलपन्ती शीघ्रमेव भूमौ निपत्याविदितवेदना विगतचेतना संजाता। इत्थं विधुरेऽपि काले भोक्तव्यजीवनावशेषेण सा प्राणैर्न वियुक्ता, महता कालेन अनुकूलपवनोपचारेण शनैः शनैश्चेतनामवाप। ततश्चोत्थाय विलपन्ती सा कथं-कथमपि कस्याश्चित् तटिन्यास्तटे जगाम। किं बहुना? तस्या रोदनेन शाखिनो गिरयः पशवश्चापि रुदन्ति। ततोऽनुकूलग्रहे शोभने समये द्वितीयभास्करमिव देदीप्यमानं तनयरत्नं जनयामास। तदनन्तरं सा कलावती तत्तनयरत्नं प्रेक्ष्य बाहूच्छेदसमुद्भवं दुःखं चानुस्मृत्य सुख-दुःखे सममेवानु-

भवति स्म। एतस्मिन् विधुरेऽपि समये सुखिनमेवात्मानं मन्यते, गुरुतरशोकेन ग्लपितमपि हृदयं पुत्रविलोकनविनोदेन आनन्दयति, यतो म्रियमाणमपि प्राणिनं पुत्रप्राप्तिसंजीवनी जीवयति। पुत्रलाभेन स्वकं सर्वमेव दुःखग्रामं विस्मृत्य सानन्दं चेदं प्राह– 'हे पुत्र! मन्नयनानन्दकर! एधस्व वर्धस्व चिरं जीव दीर्घायुर्भव। एतस्मिन्नपूर्वलाभसमयेऽपि दुर्भाग्यदग्धाऽहं किं करोमि?, वाङ्मात्रेणैव त्वां वर्धापयामि। अथ जातमात्रोऽपि स बालकः सहजचापलेन इतस्ततो विलुण्ठन् नदीप्रवाहे पतितुं यावदियेष, तावदेव पद्भ्यां तं बालकं निरुध्य सा प्राह– 'हा! खण्डिताऽहं शतशः कृतान्तेन। भो निष्कारुणिक कृतान्त! पापात्मन्! एतावता दुःखेन त्वयाऽहं पीडिता, तथापि तव नैव तुष्टिर्जाता, यत् पुत्ररत्नमपि हर्तुं ते वाञ्छा जागर्ति!'।

अथ मनसि संजातधैर्या स्वशीले दृढविश्वासा जिनधर्माराधनेऽपि सुनिश्चितभक्तिमती सा कलावती अतीव करुणापूर्णशब्देन भगवतीं नदीं देवीं प्राह–हे नदीमातः! दीनातिदीना दुःखिनी हस्ताभ्यां विरहिता अभिनवप्रसूताऽशरण्या त्वदेकशरणाऽहं, शृणोतु मातर्दीनाया मे वचनम्। अस्ति यदि जगति शीलस्य माहात्म्यं तच्च शीलं निष्कलङ्केन निर्व्यलीकेन शुद्धभावेन मया यदि सम्यगाराधितम्, तदा अस्य बालकस्य कोऽपि रक्षणोपायस्त्वया क्रियतामिति सकरुणं क्रन्दनं चकार। यच्छ्रवणेनैव संजातातिकरुणया सिन्धुदेव्या तस्मिन्नेव क्षणे दिव्यप्रभावेण तस्याः शोभने उभे भुजलते असञ्जातोच्छेदे इव कृते। ततः 'धन्याऽसि जननि! त्वमेव मे जननी' इत्येवं सानन्देन वदन्ती सा प्रवाहोन्मुखं सर्पन्तं बालं शीघ्रमेव स्वोत्सङ्गे निधाय पुत्रस्पर्शजन्यामृतमयं सुखमनुभवति स्म।

ततः सा भय-भ्रान्ता किमहं करोमीति यावच्चिन्तयति, तावदेव तत्र कुतोऽप्यागतेन तापसेन मुनिना सा निरीक्षिता।

तथाविधां परितप्यमानां तां दृष्ट्वाऽसौ मुनिः कुलपतेः पार्श्वेऽनैषीत्। तदनु तस्याः किञ्चिदुदन्तजातं श्रावयामास। ततः स्वभावतः करुणापाथोनिधिः मुनिप्रवरकुलपतिः प्रस्तावे तां शीलमतल्लिकां कलावतीं पप्रच्छ- 'भद्रे! केनापराधेनेदृक्समये सर्वैरेवेष्टजनैस्त्वं वियुक्ताऽसि?, कथय निजदुःखकारणम्' इत्थं मुनिना बहुशः पृच्छ्यमाना सा नैव वक्तुं प्रभवति स्म। ततोऽसौ कुलपतिस्तामाश्वासयामास- 'भद्रे! धैर्यमेवाश्रयणीयम्। पश्यतु तावत् लोकपरम्पराम्, को न्वस्मिन् संसारे सदैव सुखी दृश्यते?। कस्य वा सुखश्रीरखण्डिता वरीवर्ति?। केन पुरुषेण चिरकालं स्थेयम्?, कस्य वा पुनः पुनः पदे पदे स्खलनं न जातम्?, सर्वे दुःखिनो जना यदि धैर्यतरीं नाश्रियेयुस्तर्हि सपद्येव उद्वेलितभवपारावारे निमज्जेयुरतो धैर्यमेवाश्रयणीयं त्वयाऽपि। भद्रे! गच्छ तापसीनां मध्ये निजपितृगृहमिव बालं तत्र सुखेन लालय' इति कुलपतिना प्राप्तधैर्या सा कलावती अनवरतनेत्रधाराभिर्निजाननं संमार्जयन्ती कथं-कथमपि मानसोद्भवं कष्टमारुरोध। तत्र गत्वा तासां चाभिनन्दनं विधाय ताश्च निरीक्ष्य जनन्युत्सङ्गे स्थिता इव सततमात्मानं मन्यते स्म। सुखेन च निजनयनानन्दकरं तनयं विविधोपचारैरेधयामास। इतश्च सा चाण्डाली केयूराङ्गदसनाथां कर्तितां स्रवद्रुधिरां तस्या भुजलतामादाय राजानमदर्शयत्। ततश्च नृपस्तेषु भूषणेषु टङ्कोत्कीर्णं जयसेनस्याभिधेयं विलोक्य अत्यन्तदुःखदावानलभस्मसाद्भूतो दुरन्त-चिन्तापयोधिमपारयन् प्राह-' अहो! प्रतिकूलेन दैवेन ताडितोऽहमज्ञानतिमिरेणान्धीभूतोऽहमसमीक्ष्य अनुचितमकारयम्।

अहो! स्वप्नेऽपि अस्या देव्याश्चारित्रदूषणं नैवापश्यम्, न वा केनचित् पुरुषेण श्रुतम्, न कोऽपि जनश्चैतस्मिन् विषये मया पृष्टः। कुविकल्पजालेन स्वत एव तस्याश्चरित्रे दोषमुद्भाव्य सा कलावती मया विडम्बिता इति भृशं तातप्यमानो

नृपः पश्चात् दत्तश्रेष्ठिनमाहूय व्याजहार–भोः श्रेष्ठिशिरोमणे ! देवशालपुरात् कोऽपि जन एतस्मिन् समये समागतः ? तच्छ्रुत्वा श्रेष्ठी अवक्–' भो भो नरनाथ ! कल्य एव तन्नगरप्रधानपुरुषा देवीमानेतुमागतवन्तः, इदानीमपि चात्रैव तिष्ठन्ति, भवच्चरणसरोरुहेषु नोपस्थिता इदानीं यावत्'। ततश्च भूपस्तानाकार्य पप्रच्छ–' भो महानुभावा ! इदमङ्गदयुगलं देव्यर्थं किं भवन्त एवानीतवन्तः ?' । ततश्च प्रणतमूर्धानः प्राञ्जलयस्ते दुरन्तदुःखजालजर्जरीभूतं राजानं विलोक्य सर्वमेवोदन्तजातं मूलतो वर्णयामासुः । तच्छ्रुत्वा कुलिशपातशतधाक्षततरुशाख इव स नृपो मूर्च्छया व्यपगतचेतनः शीघ्रमेवावनितले निपपात । ततश्च हाहारवं प्रकुर्वद्भिः सर्वैरेव परिजनैस्तुषारघनसारचन्दनादिशीतलोपचारैः परिचारितोऽपि नृपः कथमपि चेतनां नैव प्राप्तवान्, अपि च मर्मस्थलेषु शितशल्यविद्धकुरङ्गशावक इव मुहुर्मुहुर्मुमूर्च्छ । कालान्तरेण लब्धचेतनोऽसौ नृपो दुःखाकीर्णहृदयश्चैवं चिन्तयन् विललाप–" हहा ! पश्यत मेऽकृतज्ञताम्, विभावयन्तु मेऽसमीक्ष्यकारिताम् । कुलेन क्षत्रियोऽप्यहं, कर्मणा चण्डालवदस्मि । इतः प्रभृति नैवाहं गजरत्नमारोढुमलमस्मि, न वा राज्यश्रियमुपभोक्तुम् । नात्रापि नरेषु आत्मीयमाननं दर्शयिष्यामि" । ततश्च ते सर्वे मन्त्रिपुरोगमा राजानं पप्रच्छुः– नरदेव ! किं भवता दुरनुष्ठितम् ?, येन चैवमस्मान् तापयसि। स प्राह–' भो महानुभावा! नृशंसेन मया यत् कृतं तन्नैव केनापि कृतं, नैव कोऽपि करिष्यति। मया अद्य विजयनरेन्द्रस्य वात्सल्यं, जयसेनकुमारस्य मैत्री च सौधशिरोरुहगृहेषु अङ्कितनामधेयमिव प्रचुरसुधापुस्तोपलेपेन सपद्येव स्वहस्तेनैव मार्जितम् । देव्याः कलावत्याः स्नेहमपि अविगणय्य, सम्भावितकुलकलङ्कमपि अविभाव्य तस्या देव्या निर्मलेषु चारित्रेषु अतर्क्यमपि दुश्चरित्रं स्वमनीषया प्रकल्प्य तस्या विषये यदहं सहसा कृतवान्, तदिदानीं स्मर्तुमपि नैव प्रभवामि,

किमभिवक्तुम् ?। आसन्नप्रसवा सा देवी कारणं विनैव गृहान्निष्काशिता। सहायपरिवर्जिता सा क्व स्थास्यति ? कं कं दुःखग्रामं नैवानुभविष्यति ? हा ! हतोऽस्मि, निरये पतितोऽस्मि, सर्वेभ्यः पापेभ्योऽपि गाढतरं यन्मया पापं कृतं तत् सावधानेन शृण्वन्तु। गृहान्निष्काशनेऽपि नैव मे कुतर्ककालिका प्रशान्ता, ततः तस्या हस्तावपि छ्यकर्तयम् !। अतो हे महानुभावा ! ग्रामावस्कराशिरिव सदैवाशुचिरहं सहस्रधाऽपि सुपात्रदानैर्लक्षतोऽपि महामन्त्रजापैः, कोटिशोऽपि गवां दानैः, शतशोऽपि तपोभिर्मे शुद्धिर्नैव स्यात्। किं बहुना ? निश्चितं मां विलोक्य दुरितमपि सर्पिष्यति इति। अतो हे मन्त्रिप्रमुखाः ! शीघ्रमेव काष्ठान्यानीय चितां रचयत, येन तत्रात्मानं संशोधयिष्यामि"। इत्थमतिकठिनं नृपवचनं श्रुत्वा सर्वे जनाः सहसैव शून्यमनस्का विलपन्ति स्म।

अथ रुदन्तः सर्वे ते मन्त्रिपरिजना नृपमेवं बोधयामासुः– नृदेव !

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृण्वते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥"
यद्यपि दुर्दैवयोगेन एकमकार्यं जातम्, तथापि तदुपरि पुनरपि तादृक् कार्यानुष्ठानं भवत्कृते नैव शोभते।

आक्रन्दशब्दभीमं निष्करुणानामपि जनितकारुण्यं संजातम् इति राजानं विलोक्य सर्वेऽपि मन्त्रि-पौरजना उद्विग्नमानसा जाताः।

ततोऽतिगाढतरसन्तापेन दन्दह्यमानसर्वावयवो राजा मन्त्रिजनं प्रोवाच–' भो भो मन्त्रि–सामन्त–परिजनाः ! कलावती–वियोगेन जायमानां मच्छरीरं भस्मसात्कुर्वन्तीं ज्वलनज्वालातोऽपि प्रचण्डवेगां मद्हृदिस्थां वेदनां यूयं किन्न

जानीथ ?, येन विलम्बयथ । किं बहुना ? अनेनातिदुःखेनातीव निष्करुणं निष्ठुरं मम हृदयं शतधाऽपि खण्डं खण्डं कथं न जायते ? । अतः परं मन्त्रिणः सर्वे मुख्यनागरिकाः सखायश्चापि राजानमाश्वासयन्ति– 'भो धर्मावतार ! विचक्षणावतंस ! धैर्यपयोनिधे ! सदा समीक्ष्यकारिन् ! कथं सहसा क्षते क्षारमिव इत्थं कार्यं कर्तुमुत्सहते भवान् ? यतो भयकातराणां जनानां कृते धरणीधरपर्वता इव धैर्यधारिणो भवादृशा एव महापुरुषा अवलम्बनं भवन्ति, यदि भवद्भिरेव धैर्यं त्यज्यते, तर्हि पामराणां का कथा स्यात् ? । अथ त्वदेकशरणानामस्माकं रक्षणं को विधास्यति ? अतः शरणहीनाः प्रजा रक्षन्तु भवन्तः । अपि च, अद्यावधि निस्सपत्नमखण्डितं पूर्वैरपि सुरक्षितमिदं राज्यं यदि त्वया मुक्तं, तर्हि अवश्यमेव स्वत एव हतप्रहतं शत्रुहस्तगतं भविष्यति । स्वत एव स्वकुलक्षयं कृत्वा कथं शत्रूणां मनोरथान् पूरयसि ? । को न्विह संसारे बुद्धिमान् पुरुषोऽस्ति, यः स्वकं गृहं प्रज्वाल्य प्रकाशं करोति ? । नैव कोऽपि जनो वर्तिकाऽर्थे स्वकीयं बहुमूल्यं कौशेयमुत्तरासङ्गं भनक्ति ' इत्थं विनयपीयूषसारगर्भितमादरणीयमपि तेषां वचनमनादृत्य संतापतपनतातप्यमानो नरनाथश्चचाल । उक्तं च–

"न तापयत्येष तथा दिवाकरो जाज्वल्यमानो न हुताशनोऽपि ।
यथाऽविचारेण कृतं ह्यकृत्यं भस्माभिभूतं हृदयं करोति ॥ १ ॥"

ततः सामन्त-शुद्धान्त-मन्त्रिप्रभृतयोऽनिच्छन्तमपि राजानं वाजिनमारोहयामासुः । ततो निवारितगीतवाद्यभट्टैः सर्वनागरिकैश्च परिवृतस्त्यक्तसमस्तराज्यलक्ष्मीचिह्नः स भूपः पुरान्निर्गत्य नन्दनवनासन्नमापपात । ततोऽसौ श्रेष्ठी अशुभकालहरणक्षमं राज्ञः शोकदूरीकरणसमर्थम् अन्यदपश्यन् विचिन्त्य राजानं विज्ञापयामास । ततो राजोवाच—

"किं करोमि ? क्व गच्छामि ? भो भो मन्त्रिमहोदयाः ! । हृदिस्थं दुःखसन्तापं शमयामि कथं पुनः ? ॥"

अपरञ्च-" प्रियाविरहजं दुःखं कस्याग्रे कथयाम्यहम् ? । नैव रामोऽधुना लोके नान्ये विज्ञातुमीश्वराः ॥"

ततो मन्त्रिणा प्रोक्तम्-' राजन् ! विजितरागद्वेषमोहप्रसरस्य अमरैरपि सदा पूजितस्य भगवतस्त्रैलोक्यनायकस्य जिनराजस्य सदैव दर्शनीयं दिव्यातिदिव्यमत्रैवोद्याने चैत्यं विराजते, ततो देव ! तत्रैव गत्वा भगवतो दर्शनमात्रेणैव आत्मा प्रसाद्यताम् । तथा चास्मिन्नेव रमणीयोद्याने लोके विदितप्रतापाः साक्षात् वाक्पतिरिव विराजमाना गुरवोऽपि सन्ति । तेषां दर्शनेन वन्दनेन देशनाश्रवणेन च तव मानसी व्यथा द्रुतमेव दूरीभविष्यति। किं बहुना ? तेषाममृतमयोपदेशनिषेवणेन तव परलोकोऽपि निरवद्यः स्यादिति । ततोऽसौ भूजानिः सपरिजनस्तत्रागत्य भक्तिसंभारेण भगवन्तं पूजयामास । तदनन्तरं गुरूणामन्तिके गत्वा लज्जावनतकन्धरो विहितविनयाञ्जलिर्नराधिपः तेषां पादान् प्रणनाम । तदनु तैर्लब्धधर्मलाभः प्रशान्तेन मनसा सर्वदुरितदलनदक्षां धर्मदेशनां शुश्राव । देशनान्ते राहुग्लपितशशाङ्कवन्मुखकोकनदं विलोक्य परमकारुणिकस्तापशमनसमीरणतोऽपि शीतलस्वभावो गुरुराजः प्रोवाच- राजन् ! केनापि कषायवशवर्तिना भवता अजातपूर्वोऽश्रुतपूर्वश्चानर्थो विहितस्तद्वद् द्वितीयमपि विधातुं कथं कष्टायते ? ।

उक्तं च-" पापेन जायते दुःखं पापं प्राणिवधादितः । प्राणिपातं ह्यात्मघातं सर्वपापस्य कारणम् ॥"

अतो भवान्तरेऽपि बहुकष्टदायकं स्वकीयं दुर्मनीषितं त्यज। अन्यच्च ज्ञानेन मया सम्यग्रूपेण ज्ञातम्—यदभिनवकिसलयललामभूता कल्पलतेव सा तव प्रियाऽपि अक्षतभुजाभ्यां शोभमाना शीघ्रमेव मिलिष्यति। पुनरपि तया सह चिरकालपर्यन्तमनु-

रूपसङ्गमो भवतां भविष्यति' इति। तत्र त्रिभुवनसम्पदामिव प्रचुरलक्ष्मीसनाथं सुरलोकोपमितमिदं राज्यं चिरकालमुपभुज्य अन्ते समुत्पन्नविरागो भागवतीं दीक्षां गृहीष्यति भवान्। अतो हे नरनाथ! क्षोभोद्भवं वेगं रुणद्धु। धर्मे धृतिं कृत्वा एकं दिनं तावत् प्रतीक्षस्व पश्चात् ते यथा रोचते तथा विधास्यसि। इत्थं मुनिनोपदिष्टो राजा मधुरया भारत्या ओमिति प्रतिपद्य तद्वचने जातानुरागस्तं मुनीश्वरं भक्त्या नत्वा पुरतो बहिरेवोद्याने तस्थिवान्। तत्र रात्रौ प्रसुप्तश्चैवं स्वप्नं प्रत्यूषसमयेऽपश्यत्। तदर्थसंपन्नफला अतीवमनोहरा प्रघनभारेणावनम्रा एका तरुशाखा निर्दयेन मया च्छिन्ना शीघ्रमेव भूमौ निपपात; परन्तु दैवानुकूल्येन अत्यधिकफलभराक्रान्ता पूर्वतोऽपि अधिकशोभमाना पूर्णसर्वावयवा अनभिव्यक्तक्षतप्रदेशा पुनस्तस्मिन्नेव तरौ संलग्ना। इत्थं स्वप्नं विलोक्य हर्षोद्भिन्नतनुरुहः शङ्खस्वनेन प्रभाते जजागार। ततश्चेतसि चैवममीमांसत। 'अहो! सत्यमेव गुरूणां वचनम्, प्रकटार्थप्रवक्तारो हि गुरवो भवन्ति, शीघ्रमेव सपुत्रा देवी समागमिष्यति' इति मे मनसि विश्वासः। ततः स्वस्थतामापन्नः सभामण्डपे गत्वा दत्तमाहूय सर्वं स्वप्नगतं वर्णयामास। तं श्रेष्ठिनं वर्धापयामास च। प्रोवाच—"भद्र! तद् वनं गत्वा सर्वप्रयत्नेन साऽन्वेषणीया। 'नहि असत्यवक्तारो गुरवो भवन्ति' साऽवश्यमेव पुण्ययोगेन मिलिष्यति॥

"पुण्यानि पूर्वतपसा किल सञ्चितानि काले फलन्ति पुरुषस्य यथैव वृक्षाः॥ १॥"

ततो दत्तस्तस्याज्ञामादाय शीघ्रमेव तस्मिन् वने समाजगाम। इतस्ततस्तां गवेषमाणः कमपि तपस्विनं प्राप्तवान्, तेन च तस्याः समाचारं ज्ञात्वा तस्य कुलपतेराश्रमं ययौ। ततस्तस्मै निजागमनकारणं निवेद्य तेन सहितः स दत्तः तापसीनामाश्रमे जगाम। तत्र तापसीनां मध्ये पुत्रयुतां तां नृपप्राणवल्लभां विलोकनमात्रेणैव उभावपि धीरतां विमुच्य चिरकालेन

 



निरुद्धमपि महद्दुःखमनवरतं नेत्राभ्यां प्रपतन्तीभिरश्रुधाराभिः शमयामासतुः । ततः कथमपि धैर्यमवलम्ब्य दत्तः प्रोवाच– "भगिनि ! नैवमात्मानं खेदय, प्रतिकूलदैवस्यैतद् विजृम्भितम् । भद्रे ! यावन्ति दुःखानि त्वया सोढानि ततोऽधिकतराणि नृपेण मर्षितानि; किमधिकं वच्मि ? नृपेणेत्थं प्रतिज्ञातम्–'यदि सा मम प्राणप्रिया नैव मिलिष्यति, तस्या आननावलोकनमन्तरेणाहं क्षणमपि प्राणान्न धारयिष्यामि' हुताशने प्रविशन्तं तं निवार्य त्वामन्वेष्टुमागतोऽस्मि । प्रसीद भगिनि ! क्षमस्व तस्याविचारितम्"। इत्थं तद्वचनेन नृपतेरध्यवसितं ज्ञात्वा सुकुलोद्भवा सरक्तस्वभावा सा तत्र गन्तुं मनो दधे । यतः प्रतिकूलविपदां निवारणं हितकरचिन्तनमेव कुलाङ्गनानां परमो धर्मः । अतो योगक्षेमकरं पितृसन्निभं तं कुलपतिं तांश्च साध्वीः पृष्ट्वा दत्तानीतरथोपरि पुत्ररत्नसमेता शची इव सा स्थितवती । ततो दत्तेन प्रतोद्यमाना अस्खलितगतयः पवनातिपातिनो वाजिनो रजनीमुखे समये नगराद् बहिःस्थे नृपावासे रथमानीतवन्तः । ततो रथस्थामखण्डितभुजलतासनाथां पुत्ररत्नयुतां तां प्रियां विलोक्य स्वकृतकर्मणा व्रीडानतकन्धरः पुलकितसर्वावयवः स्वासनादुत्थाय भूपतिः पुनः पुनः कलावतीं क्षमयामास । तत सान्ध्यं विधिं विधाय स्रवदानन्दामृतसम्पृक्तसर्वावयवो भूजानिः सर्वमेव परिजनं तदा विसृज्य सिंहासनादुत्थाय महताऽऽनन्दसन्दोहेन प्रियापार्श्वे समाजगाम । तदवलोकनमात्रेणैव संजातव्रीडाऽवनताननः स्वकृतेन कार्येण चेखिद्यमानस्तातप्यमानश्च मनसि स्थितं सर्वमेव सन्तापसंतानं श्रावं श्रावं भूयो भूयस्तां क्षमयामास । ततः सा कलावती सर्वमपि नृपेण कृतं दुष्कार्यमगणयन्ती स्मेरानना राजानमब्रवीत्–'प्राणनाथ ! दुग्धात् पूतरकर्षणोपमो नैव ते लेशमात्रोऽपि दोषः, किन्तु सर्वमेव मम जन्मान्तरविहितदुष्कर्मणां परिपाकः ।

यतः-" सव्वो पुव्वकयाणं कम्माणं पावए फलविवागं। अवराहेसु गुणेसु य निमित्तमित्तं परो होई ॥"

तथापि हे स्वामिन्! भवन्तमेतत् पृच्छामि-'कीदृशो ममापराधो भवता विलोकितो येनाकाण्डे ईदृशः प्रचण्डदण्डो ममोपरि विहितः'। ततो राजा व्याजहार-'प्रिये! कथमेवंविधं लज्जितमपि मां विलज्जयसि?। देवि! दुग्धात् पूतरकर्पणोपमं तथा वन्ध्यद्रुमे फलोद्गमप्रायं खपुष्पोपमं भवति भवत्यां दोषोद्भावनं; तथापि पूर्वोपार्जितदुष्कर्मपरिणामैरन्धीभूतेन मया असम्भाविताश्रुतो दोषलेशोऽपि भवत्यामाकलय्य आरोपितः'। तदनु नृपेण विज्ञापिता सा सञ्जातव्रीडावनम्रानना सर्वमेव विपिनजनितदुःखजालं श्रावयामास। महाराज! योऽयमिदानीमभ्युदयो मयाऽनुभूयते स सर्व एव शीलस्यैव प्रभावोऽस्ति। ततः शङ्खावयवसन्निभं तस्या निर्मलं चरित्रं श्रुत्वा राजा उदाजहार-'प्रिये! अस्मिन् भुवनमध्ये निशाकरार्कौ यावत् तावद् ममापयशसां पटहप्रणादो लोकैर्वादिष्यते, भवत्याश्च निरुपमशीलपटह एवेति सुनिश्चितम्। किमधिकं वच्मि त्वद् विरहेममायमभिलापो पुनः २ संजातः "देवास्तु भद्रं तव येन निर्मिता, सुलोचना सा विजिताऽमरांगना। पक्षौ कुरु त्वं खगतिक्षमौममाऽधुनैव पश्यामि यथा प्रियाननम् १॥ अधुनाऽपि प्रचण्डज्वलनज्वालोपमानुतापज्वलनेन प्रज्वलितं मे हृदयं तव दर्शनतोयधाराभिरनवरतं संसिच्यमानमपि नैव शान्तिमधिगच्छति। अपरञ्च परमकारुणिक-गुरुवरवचनविश्वासवशेनैव मया प्राणा धृतास्तदनुकूलमेवावयोर्भूयस्समागमो जातः। ततोऽसौ देवी चचक्षे-'प्राणनाथ! अहं त्वेवं मन्ये यत् स्वार्भकस्य पुण्यप्रभावेणैव विषमीभूताऽऽवयोरवस्था सुसमीभूता। अतः खलु ज्ञानदातृगुरुभिः सर्वं ज्ञात्वा विवेकेन भवते सद्बुद्धिर्दत्ता। अतः कारुण्यपुण्यपूर्णहृदयोऽसौ मुनीश्वरः सदैव स्मरणीयः। अहमपि कल्ये तं महामुनिराजं द्रष्टास्मि। ततो भूभुजाऽपि तथैवाभ्युपेतम्। इत्थं परस्परालापेन

शमित-वियोगाग्नि-जनित-सन्तापयोरभिनवस्नेह-निमग्नयोस्तयोः सा क्षणदा क्षणेनैवागात् । ततः प्रभातसमये तौ दम्पती तस्यामिततेजसो मुनेः पार्श्वे गत्वा प्रचुरभावेन तस्य पादौ नमतः । तेनापि मुनिना शीलसारगर्भिता शीलदेशना दत्ता । तथाहि–

"शीलं प्राणभृतां कुलोदयकरं शीलं वपुर्भूषणम्, शीलं शौचकरं विपद्भयहरं दौर्गत्यदुःखापहम् ।
शीलं दुर्गतिकन्दकन्ददलनं चिन्तामणिः प्रार्थितः, व्याघ्र-व्याधि-जलानलादि-शमनं स्वर्गापवर्गप्रदम् ॥"

किं बहुना ? शीलवतां जनानां शीलप्रभावं ज्ञात्वा त्रिदशा अपि तस्य पादमूले लुठन्ति किं पुनरन्ये ? शीलगुणसंकीर्तनपरास्ते अमरा उपद्रवग्रस्तानां जनानां साहाय्यमपि कुर्वन्ति । अथवा किं पुनरनेन प्रियाया देहस्याभिनवेन ? शीलस्य माहात्म्यं स्वयमेव त्वं वेत्सि । यथा प्रदीप्तमपि हुताशनं जलं शमयति, तथैव शीलपालननीरं शीलव्रतः सन्तापं तं विलयति । तथा शीलज्वलनः सहस्राण्यपि कामेन्धनानि भस्मसात् करोति । तेषु मध्ये जितरागद्वेषो जिन एव देवः, द्वेषवर्जिता गुरवः, कारुण्यपूर्णा एव धर्मास्तेषु शुद्धाः तथा भावनाः सम्यक्त्वम् उच्यते । तस्माद् अधरीकृतचिन्तामणि-कामधेनु-कल्पद्रुमाणामिव महात्मनां कृते इदं सम्यक्त्वं सर्वेषां धर्माणां कारणं प्रवदन्ति मनीषिणः ।

अत्रान्तरे महता विनयेन बद्धाञ्जलिः सा कलावती गुरुं नमस्कृत्य प्रोवाच–'गुरो ! केन कर्मणाऽतीवसुकोमलावपि मे भुजौ छेदं गतौ ?, त्वत्तोऽन्यमस्य संशयस्य छेत्तारं नैव पश्यामि' इत्युक्ते सति असौ ज्ञानदिवाकरो मुनीश्वरो व्याजहार–'भद्रे ! सावधानेन निशम्यताम् । अस्मिन् भरतक्षेत्रे अत्यन्तरमणी अवन्ती नाम नगरी विद्यते । सा च स्वकीयसौन्दर्यपूर्णसंपदा विजयविमानमपि विजयतेतराम् । तत्र जनितजनतामनोविनोदः शशाङ्कवद्धवलशीलपरम्पराकलितोऽन्वर्थनामा नर-

चन्द्रनामा भूपो बभूव। यथा रोहिणी शशिनमुपगतवती तथा ततोऽपि अधिकशीलवती चन्द्रयशानाम्नी तस्य प्राणवल्लभा जाता। तयोर्गेहे पुत्रतोऽप्यधिकप्रियो वचनसारः शीलराशिर्मतिमान् एको राजशुकस्ताभ्यां पालितो वर्धितो रक्षितश्च तिष्ठति स्म । सा देवी प्रयत्नपूर्वकं तं शुकं कनकपिञ्जरे निधाय आनन्दपूर्णहृदया चूत-दाडिमादिभिस्तं पालयामास । अपरं च अभिनवरम्य-काव्यकथाभिस्तं शिक्षयति स्म। स्वत एव पठन्तं तं विलोक्य अमन्दानन्दसन्दोहेन हृदि तुष्यति, किमधिकं ? तद्विरहक्षणमपि युगायते। एवं तस्मिन् अनुरक्तचित्ता सा तद्-वियोगे सर्वमेव जगच्छून्यं मन्यते । एकस्मिन् समये देवरमणोद्याने बहुशिष्य-परिवृतं श्रीसुव्रताचार्यं समवसृतं श्रुत्वा परिजनैः समुपेतः सभार्यो नृपोऽपि गुरोर्वन्दनार्थं तत्रोपाजगाम । श्रद्धया शुद्धभावेना-वनितलनमितोत्तमाङ्गः सपरिजनो राजा तस्य पादपद्मे वन्दित्वा तेन देदीयमानां निखिलधर्मप्रधानां धर्मदेशनामशृणोत्—

" सुखानां कारणं धर्मं कुर्वन्तु नितरां जनाः । निदानं सर्वदुःखानां पापं नैव समाचरेत् ॥ १ ॥ "

तस्माद् दुःखभीरवः सुखैषिणो भवन्तो धर्म एव रतिं कुर्वन्तु । सर्वेषां धर्माणामिदं-रहस्यमेकेनैव सारगर्भितेन वचसा परमकारुणिकेन मुनिना कथितम्–" आत्मनः प्रतिकूलानि न परेभ्यः समाचरेत् । " ततोऽसौ प्रियया समेतो राजा सम्यक्त्वमूलानि द्वादश व्रतानि प्रतिजग्राह । पश्चात् तस्य पादवन्दनं पुनः पुनः कृत्वा सपरिजनो राजा निजभवनं प्रति निवृत्तः सन् गृहस्थधर्मं सुखेन परिपालयन् कालं गमयामास । अपरञ्च अष्टम्यां चतुर्दश्यां तिथौ तेन कीरेण सह सुखासनस्था सा चन्द्रयशाश्चैत्यगृहे गत्वा अनेकैः सम्भारैर्देवान् पूजयति स्म; भक्तिबहुमानपुरस्सरं यथाविधि चैत्यवन्दनं विधाय शब्दार्थसारगर्भितां स्तुतिं वचनसारपार्श्वे शृणोति । अन्यदा केनचित् कारणेन सा देवी चैत्ये न जगाम, परमोत्सुकः

शुकः कथमपि चैत्यं प्राप्तवान् । तत्रस्थानि यावन्ति जिनबिम्बानि तान्यखिलान्यपि महत्या भक्त्या नमस्कृत्य स शुकराजो देवीसन्निधौ समाससाद । ततः शुकनिर्गमनेनोच्चैः संक्षुब्धचित्ता संजातक्रोधा सा चन्द्रयशाः संजाता । तस्मिन् समये समागतं तं विलोक्य सन्तप्ततैले तोयबिन्दुरिव द्विगुणितक्रोधा तं शशाप--रे पापिष्ठ! दुरात्मन् ! चलचित्त ! स्वेच्छाचार ! निर्लज्जशेखर ! इत्यादि बहुभिः शब्दैस्तं निर्भर्त्स्य तस्य द्वावपि पक्षौ चिच्छेद । ततोऽसौ प्राणैर्विमुक्तो जिनधर्माराधनप्रभावेण सौधर्मविमाने कोऽपि देवो जातः । तदा सा चन्द्रयशाः पश्चात्तापेन तातप्यमाना आत्मानं बहुविधं गर्हयन्ती शल्यविद्धमर्मस्थलमिव स्वहृदयं दोदूयमाना तद्वियोगेन शून्यमिव सर्वं मन्वाना तेन पापेन भयद्रुतान्तःकरणा धर्म एव विशेषेणादरवती संजाता । सा राज्ञी तेन महीभुजा सह परमश्रद्धायोगेन श्रावकधर्मं परिपाल्य अन्तसमये प्राणैर्वियुज्य सौधर्मविमाने समुत्पन्ना । पश्चान्नृपोऽपि स्वायुः परिसमाप्य तत्रैव विमाने सोऽपि जातः । ततश्च्युत्वा नरचन्द्रस्य जीवः शङ्खनामा नृपो भवति स्म । पश्चात् चन्द्रयशसो जीवः ततश्च्युत्वा कलावतीरूपेण जातः । तस्य वचनसारस्य जीवस्तयोर्नयनानन्दकरो नन्दनस्तव कुक्षितो जातः। भद्रे ! तस्य कीरस्य पक्षच्छेदनेन तत्रापि बाहुच्छेदो जातः। ऐहिकामुष्मिकभवसञ्चितपुण्यप्रभावेण निर्मलशीलाराधनेन च सर्वेषामपि विस्मयकरो भुजयोः पुनरारोहः तेषामेव फलं विद्धि। ततः सा कलावती विनयेन विहिताञ्जलिः सादरं तं मुनीश्वरं विज्ञपयति स्म--' भगवन् ! अतिप्रचण्डवज्रपाततोऽपि कठोरादस्मात् संसारदुःखाद् आवां भयवेपमानौ स्वः, तस्मात् शिवसौख्यदायिनीं प्रव्रज्यामेव ग्रहीतुमिच्छावस्तथापि एष अर्भकः पर्वततोऽपि बहुभारकरमेतद्राज्यभारं वोढुं नो शक्नोति, यदा तद्-भारवहनसमर्थो भविष्यति, तदा तां दीक्षां लास्यावः। इदानीं श्रावकधर्ममेव ग्रहीतुमभिलषावः।

ततोऽसावमिततेजा गुरुः सम्यक्त्वसंयुतं गृहस्थधर्मं ताभ्यां ग्राहयामास। ततश्च सभार्योऽसौ नृपस्तस्य गुरोः पादवन्दनं विधाय निजनगरं प्रविवेश। तेन नागरिकाणां परमानन्दसंदोहमन्तानोदयो बभूव। तदनु सतीमतल्लिकायास्तस्याः शीलमाहात्म्यं प्रकाशयन्तो देवा अप्रतिहतमङ्गलतूर्यध्वनिनिनादं चक्रुः, तेन च दिग्-विवराणि परिपूरितानि। तद्रवं श्रुत्वा कौतुकाकुलिताः सर्वे नागरिकजनास्तां देवीं निरीक्षितुं तत्रागत्य मिमिलुस्तेन तन्नगरं कमलाकरायते स्म, अपरं रमाया निवासस्थानोपमं बभौ। ततश्च तां देवीं विलोक्य तस्या अयशः प्रक्षालयन्त्यः काश्चित् वामलोचना अनेकशः सितकुसुमाञ्जलिधारा देव्यै ददति। काश्चिद् धृतसन्तापसंततिं प्रकाशयन्त्यो दन्तैर्धृतकरशाखाश्चित्रार्पिता इव बभूवुः। काश्चिच्च तस्या अयशोमलं मूलतो निर्मूलयन्त्यो महता आनन्देन स्तुतिपरायणाः तिष्ठन्ति स्म। इत्थं नागरिकाणां परमानन्दं जनयन् सभार्यः स नृपः कृतमङ्गलसहस्रं देवविमानोपमं निजमन्दिरं प्रविवेश। तस्मिन् समये प्रथमपुत्रलाभेन परमानन्दितस्तथा प्रियासमागमेन च सञ्जातातिगुरुप्रमोदो नृपो विशेषरूपेणानेका वर्धापनक्रियाः कारयामास। तथाहि- पिञ्जरस्था असंख्याताः शुका निजादेशेन तेन मोचिताः, क्वचिद् बन्दिनः कारागारतो निष्कासयामास। केषांचित् आजीविकार्थं विविधा वृत्तिः कृता। पश्चाच्च तस्य शुकस्य सम्बन्धं स्मृत्वा चारित्रपालने विशेषानुरागवान् सञ्जातः। राज्ञो मरणान्निवृत्तिः, देव्या मिलनं, प्रथमपुत्ररत्नस्य लाभः, इत्थं योगत्रयं विलोक्य तस्मिन् दिवसे सर्वमेव भूवलयं पीयूषप्रायमभूत्। एवं कृतसकलजनविस्मयमुपहसितघनदर्द्धिकमनर्गलं धनं याचकेभ्यो यथेच्छं वितीर्य धर्मध्यानेषु देव-पूजनेषु गुरुभक्ति-परायणेषु सत्सु राज्ञो दश दिनानि व्यतीयुः। ततो द्वादशे दिवसे कृतनित्यक्रियः सभार्यः स नृपः कमपि दैवज्ञमाहूय देवार्चनपूर्वकं तस्य बालकस्य नामकरणसंस्कारं कारयामास। 'पूर्ण-

कलशस्वप्नदर्शनेन लब्धजन्मा त्वं जननी-जनकयोर्जीवनदायको भव' इत्युक्त्वा पूर्णकलश इति तस्याभकस्य नाम चकार। ततः पित्रा जनन्या च यत्नेन पाल्यमानोऽसौ कुमारः गिरिकन्दरस्थितः शङ्ख-कुन्द-पयः-फेनधवलं लक्ष्म्या निवासभूतं तद्राज्यं सभार्यो भूपोऽपि चिरकालं पालयामास। अथ कदाचित् तस्मिन्नेव पुरे अमिततेजसः सूरयः समवसृतवन्तः। तेषां वन्दनकृते महिष्या समुपेतो महीपतिस्तत्रागतवान्। तेषां पाद-सरोरुहं नमस्कृत्य उचितासननिषण्णस्तैर्दीयमानां धर्मदेशनां दत्तैकमनाः शुश्राव—

" धन्यास्ते हि महात्मानः सर्वदा ये जितेन्द्रियाः। जहुर्वैषयिकं सौख्यं विपाके दुःखकारणम् ॥ १ ॥ "

" जिनधर्ममहोरात्रं ये शृण्वन्त्याचरन्ति च। वन्द्यास्ते स्वविवेकेन ये च विश्वोपकारिणः ॥ २ ॥ "

श्रुत्वेदं संविग्नमानसो राजा गृहं गत्वा पूर्णकलशं महदाडम्बरेण राज्ये संस्थाप्य कलावत्या सह सद्गुरूणां पादमूले प्रवव्राज तदनु तीव्रतपश्चरणकरणतत्परश्चिरं स राजर्षि गुरुभिः समं महीमंडले विजहार। ततश्च स राजर्षि गृहीतसूतार्थ-सारोद्विधापि संलेखणांविधाय प्रान्तेऽनशनं कृत्वा सौधर्मस्वर्गे उत्पन्नः। आर्या कलावत्यपि निर्मलतपःशीलसुपवित्रात्मा कालमासे कालं कृत्वा महर्द्धिकदेवत्वेन शंख राजर्षे र्जीवस्य मित्रत्वेण उत्पन्ना यतः समानभावभावितात्मनाम् पुंसाम् समानैवगतिर्जायजे। तत्रत्यानिसुखान्यनुभूय देवतायुः समाप्य तौ द्वावपि कतिचिद्देवभवान् मनुष्य भवा। श्चानुभूयो-त्तरोत्तरां महर्द्धिमनुभूय मोक्षं गमिष्यतः

इति न्यायाम्भोनिधि, नवयुगप्रवर्तक, तपगच्छाधिपति १००८ श्रीमद् विजयानंदसूरीश्वर प्रसिद्ध नाम (श्री आत्मारामसुनीश्वर) पट्टालंकार कलिकाल कल्पतरु अज्ञान तिमिर तरणि १००८ श्रीमद् विजय वल्लभसूरीश्वर पदपंकज भ्रमर विजय ललितसूरि० अनुवादित गद्य बंध सुदर्शना चरिते द्वितीयः प्रस्तावः समाप्तः

## ॥ श्रीशीलरत्नसूरिकृतं श्रीसीमंधरस्वामिनोऽष्टकम्* ॥

कल्याणलतासुवसंततुम्, सुरभासुरभासुरभावनतं । सीमंधरजिनमतिमधुरगिरं, नम काममकाममकामहरं ॥ १ ॥
क्रियते स्तवतस्तव येन समासमतारमतारसतारसना । सफला तमवैमि महीवलया–समहं समहं समहं कलया ॥ २ ॥
गुरुगर्वमसौ हरतात्तपन–च्छविदेहविदेहविदेहजनः । जिनपं सुखयन्ननुमोहकिरा, सितया सितया सितया स्वगिरा ॥३॥
रसना हि परत्र कृते रमते, मम नाममनाममनागपि ते । इतरत्र पिकी तु धृतिं प्रणते, सुरसालरसालरसा लभते ॥ ४ ॥
त्वरते मम हृद्व्रजनाय भवत् पदयोरुदयोरुदयोरु न च । त्वमुपायमधीश तदाप्तिकरं, वद भावदभावदभाग्यहरम् ॥ ५ ॥
किल कर्म पुमांस्तवरुच्यरवैरसदस्य सदस्य सदस्यति वै । वनवज्जलदस्य जलैः सुचिरं, समता समता समतापभरं ॥६॥
तव भक्तिरिहापि तमांसिगतेर्द्विपराजपराज पराजयते । अत एव बुधैर्भवतोत्रकृतां जपराय पराय परायणता ॥ ७ ॥
भवते हरतिस्तवनाग्निसमा, भवमा भवमा भवमालिसमा । शमपुत्र भजेयभवच्चरणभ्रमरोहमरोहमरोहगुण ! ॥ ८ ॥
+इति चारुचंपककनककेतुककायकांतिकलाञ्जुपः, सीमंधरस्य श्रीजिनस्य प्रणत सुकृतश्रीपुषः ।
यमकाष्टकं यः प्रातरशठः पापठीति स पापतः, शीघ्रं विमुक्तः श्रयति परमानंदमुन्नतिशोभितः ॥ ९ ॥

## श्री वीतरागाष्टकम्+ ।

तुभ्यं नमः समयधर्मनिवेदकाय ! तुभ्यं नमस्त्रिभुवनेश्वरशेखराय ! तुभ्यं नमः सुरनरामरसेवितार ! तुभ्यं नमो जिन !

---

* उपस्थितावृत्तम् । + हरिगीतवृत्तम्.

जनार्चितपङ्कजाय ! ॥ १ ॥ तुभ्यं नमो विलसिते हरिचन्दनाय ! तुभ्यं नमो वरकुलाम्बरभास्कराय ! तुभ्यं नमः प्रणतदेव-नराधिपाय ! तुभ्यं नमः प्रवररूपमनोहराय ! ॥ २ ॥ तुभ्यं नमो हरिणनायकनायकाय ! तुभ्यं नमो यतिपतिप्रतिपालकाय ! तुभ्यं नमो विकचनीरजलोचनाय ! तुभ्यं नमः स्तनितनादविराजिताय ! ॥ ३ ॥ तुभ्यं नमः कुशलमार्गविधायकाय ! तुभ्यं नमो विकटकष्टनिषेधकाय ! । तुभ्यं नमो दुरितरोगचिकित्सकाय ! तुभ्यं नमस्त्रिजगतो हृदि भूषणाय ! ॥ ४ ॥ तुभ्यं नमो दलितमोहतमोभराय ! तुभ्यं नमः कनकसन्निभभूघनाय ! । तुभ्यं नमोऽप्यखिलसद्गुणमन्दिराय ! तुभ्यं नमो मुखकलाधिक चन्द्रिकाय ! ॥ ५ ॥ तुभ्यं नमोऽतिशयराजिविभूषिताय ! तुभ्यं नमः कुमतितापसुभञ्जनाय ! तुभ्यं नमो सुखपयोधिवहित्र-काय* ! तुभ्यं नमो विगतकैतवमत्सराय ! ॥ ६ ॥ तुभ्यं नमो विदितभव्यजनाशयाय ! तुभ्यं नमो निखिलसंशयवारकाय ! तुभ्यं नमः प्रथितकीर्त्तियशोन्विताय ! तुभ्यं नमो जितहृषीकमुनीश्वराय ॥ ७ ॥ तुभ्यं नमः प्रमितपुद्गलनिर्मिताय ! तुभ्यं नमः सकलवाङ्मयपारगाय ! तुभ्यं नमो भविकचातकनीरदाय ! तुभ्यं नमश्चरणवैभवदायकाय ! ॥ ८ ॥

## पुरुषादानी पार्श्वदेव नाममाला ।

पासजिनराजसुणिआजशंखेश्वरा, परमपरमेश्वरा विश्वव्याप्यो । भीडभांगीजराजादवांनोजई, थिरथई "शंखपुरी" तामथाप्यो ॥१॥
सारिकरिसारमनोहारिमहाराज तुं, मानमुझवीनतीमन्नमाची । अवरदेवातणीआसकुणकामनी, स्वामीनी सेवनाएकसाची ॥२॥
तूंहीअरिहन्तभगवन्तभवतारणो, वारणोविषमभयदुःखवाटे । तूंहीसुखकारणोसारणोकाजसहु तूंही मनोहारणो साचमाटे ॥३॥

* यानपात्राय.

अंतरीक अमीझरा पासपंचासरा भोयरापास भाभा भटेवा। विजयचिन्तामणि सोमचिंतामणिस्वामीसिप्रातणी करोसेवा ॥४॥
फलवृद्धिपास मनमोहना मगसिया तारसल्ला नमुं नांहि तोटा। सकबलेचाप्रभु आसगुल अर्जिया बंभणा थंभणा पासमोटा ॥५॥
गंवी गोडी प्रभुनीलकंठा नमुं हलधरा सांमला पास प्यारा। सुरसरा कंकणा पास दादा वली सूरजमंडननमुंतरणतारा ॥६॥
जगतवल्लभ कलिकुंड चिंतामणि–लोढणासेरिसा स्वामिनमिये। नाकोडन्हावला कलियुगा रावणा पोसीनापास नमिदुःखदमियें ॥७॥
स्वामीमाणिक नमुंनाथ सारोडिया–नकोडा जोरवाडी जगेशा। कापली दौलती प्रसमिया मुंजपुरा गाडरीया प्रभुगुणगिरेशा ॥८॥
हमीरपुरपास प्रणमुं वली नवलखा भीडभंजन प्रभुभीडभागे। दुःखभंजन प्रभु डोकरीया नमुं पास जीरावला जगतजागे ॥९॥
उज्जंती उज्जेणिये सहसफणा साहेबा महिमदावाद कोको कडेरा। नारींगा चंचू चल्ला चवलेसरा तवली फलविहार नागेंद्रनेरा ॥१०॥
पासकल्याण गंगाणिया प्रणमिये पल्लविहार नागेंद्रनाथा। कुर्कटईश्वरा पासछत्राअहि कमठदेवेनम्या शक्रसाथा ॥ ११ ॥
तिमिरगोगो प्रभुदूधिया वल्लभा शंखल घीतकल्लोल बूढा। दींगडमल्ला प्रभुपास झोटिंगनीजासमहिमानहींजगतगूढा ॥ १२ ॥
चोरवाडी जिनराज उद्दामणि पास अज्झावरा नेवनंगा। कापडेरा वजेवो प्रभु छेछली सुःखसागरतणाकरेसंगा ॥ १३ ॥
विज्जुला करकडु मंडलीका वली मुहुरिया श्रीफलोधी अनिंदा। ओआ कुलपाक कंसारिया डंवरा अनियला पासप्रणमुआनंदा ॥१४॥
नवसारी नवपल्लवा पासजी श्रीमहादेववरकाणवासी। परोकल टांकल नवखंडा नमुं भवतणीजायजेहथीउदासी ॥ १५ ॥
मनवंछित प्रभुपासजीनेनमुं वली नाथ साचानगीना। दुःखदोहगतजीसाधुमारगभजीकर्मनाकेसरीथी न वीना ॥ १६ ॥
अश्वनृपनन्द कुलचन्द प्रभु अलवरा घीवडा पास कल्याणराया। होवेकल्याणजसनामथीजय हुवेजननीवामानेधनजेहजाया ॥१७॥

एकशतआठप्रभुपासनामैंथुण्यासुखसंपतिलह्योसर्ववातें । ऋद्धियशसंपदासुखशरीरेसदानाहीमनांमाहिरेकोईवाते ॥ १८ ॥
सांचजाणीस्तव्योमझमाहरे गम्योपास हृदयेरम्योपरमप्रीते । समीहितसिद्धिनवनिद्धिपाम्योसहुमुझथकीजगतमांकोनजीते ॥१९॥
काजसहुसारजे शत्रुसंहारजेपाससंखेसरामौजपाउं । नित्यपरभातिउठीनमुंनाथजी !, तुझविनाअवरकुंणकाजे ध्याउं ? ॥ २० ॥
अठारएकासियेफालगुमासिये, बीजकज्जलपखेछंदकरियो । गौतमगुरुतणाविजयखुशालने, उत्तमेंसंपदासुखवरियो ॥ २१ ॥

## प्रकटप्रभावी श्री शंखेश्वरपार्श्वनाथ स्तोत्र

अपुपूजजत्वां विनमिर्नमिश्च, वैताढ्यशैले वृषभेशकाले । सौधर्मकल्पे सुरनायकेन, त्वं पूजितो भूरितरं च कालम् ॥ १ ॥
आराधितस्त्वं समयं कियन्तं, चान्द्रे विमाने किल भानवेऽपि । पद्मावतीदेवतया च नागा-धिपेन देवावसरेऽर्चितस्त्वम् ॥२॥
यदा जरासन्धप्रयुक्तविद्या-बलेन जातं स्वबलं जरार्तम् । तदा मुदा नेमिगिरा मुरारिः पातालतस्त्वां तपसा निनाय ॥ ३ ॥
तव प्रभो स्नात्रजलेन सिक्तं, रोगैर्विमुक्तं कटकं बभूव । संस्थापितं तीर्थमिदं तदानीं, शंखेश्वराख्यं यदुपुंगवेन ॥ ४ ॥
तथा कथंचित्तव चैत्यमत्र, श्रीकृष्णराजो रचयां चकार । स द्वारकास्थोऽपि यथा भवन्तं, ननाम नित्यं किल सप्रभावम् ॥ ५ ॥
श्रीविक्रमान्मन्मथ बाणमेरु-महेश तुल्ये समये व्यतीते । त्वं श्रेष्ठिना सज्जननामकेन, निवेशितस्सर्वसमृद्धिदोऽभूः ॥ ६ ॥
शंखपुरे सूर्यपुरोऽनवाप्त-स्त्वत्तोऽधिगम्याङ्गमनःस्वरूपम् । अचीकरद् दुर्जनशल्यभूपो विमानतुल्यं तव देव चैत्यम् ॥ ७ ॥

पू. आ. श्री विजयकमलसूरिजी वडोदा में ही रहे । इस ग्रंथकालेसक भी उनके साथ था ।

पू. आचार्य महाराज का नियम था कि चार मास प्रायः मौनावलंबी रहना इस लिये व्याख्यान का भार इस ग्रंथलेखक के उपर था ।

मध्याह्न के समय—श्राद्धदिनकृत्य मुनियों को वंचाया जाता था ।

उस चौमासे में पू. आचार्य म. सुदंसणचरियं विचारते थे तब उन पूज्यपुरुषोंने कहा ललितविजय ! यह ग्रंथ मागधी भाषा में है अगर इसका अनुवाद संस्कृत में होजावे तो अनेक जीवों को इस उत्तम ग्रंथ के पठन—पाठन का लाभ मिले। उन महात्माओं की आज्ञा को शिरोधार्य कर के मैंने इस काम को शुरु किया । पहला भाग छप गया ।

उसके बाद वि. सं. १९७१ से लेकर २००२ तक इस कार्य को हस्तगत नही किया किन्तु अनेक सज्जनों की प्रेरणा जारी रही उनकी प्रेरणा के वशवर्त्ती होकर दूसरा प्रस्ताव लिखा गया और ३० वर्ष पहेले छपे हुए प्रथम प्रस्ताव के साथ यह दूसरा प्रस्ताव प्रकट होता है । सज्जन महाशय स्खलना की क्षमा करे और सुधार कर वांचे ।

निवेदक आचार्यदेवश्रीमद्विजयवल्लभसूरीश्वर चरणोपासक शिष्य

**विजयललितसूरि**

पालिताणा ( सिद्धक्षेत्र ) चै. सु. पंचमी ।

श्री आत्मारामजी महाराजने अपने अतुल सामर्थ्य से बहोत सारे ऐसे महत्त्व के कार्य कर बतलाये है कि जो सामान्य व्यक्ति की शक्ति से बाहिर हैं।

दिल्ली से लेंकर रावलपींडी अथवा वीतभयपत्तन ( भेरा ) तक धर्म की ध्वजा का फरकाना।

प्रत्येक गाम में प्रकृष्ट मनोहर जिनमन्दिरों का बनवाना।

आबालगोपाल के लिये अनेक सरल ग्रन्थों की रचना का करना।

प्रत्येक ग्राम नगर में अपूर्व ग्रन्थरत्नों का संग्रह करना।

विद्वान् क्रियापात्र शिष्यरत्नों कों प्रव्रज्याप्रदान करना।

लाखों मनुष्यो के हृदय में बोधिवीज ( सम्यक्त्व ) का बोना-अमेरिका तक जैनधर्म को फैलाना।

यह सब इसी महापुरुष की शक्ति का फल है।

श्रीमद् आत्मारामजी महाराज को श्रीमद्विजयवल्लभसूरिजी के ऊपर अटल विश्वास और असीम राग था।

इसीके फलस्वरूप उन्होने पंजाबरक्षण का भार श्रीमद्विजयवल्लभसूरिजी को सोंपा था।

श्री मदात्मारामजी महाराज के पीछे भी अनेक वर्षो तक पंजाब में विचर कर श्रीमद्विजयवल्लभसूरिजी जब गुजरात पधारे तब आपके साथ श्रीमोतिविजयजी आदि अनेक ऐसे साधु थे जिनको श्रीमद् आत्मारामजी महाराज के नाम उपर अत्यंत राग था।

उन सुयोग्य साधुओं के सामने श्रीमद्विजयवल्लभसूरिजी महाराजने अपना मनोगत अभिप्राय प्रकट करते हुए कहा कि-बहुत वर्षों

के बाद हम गुजरात में आये हैं, और फिर पंजाब ही जाना है इस लिये अगर अपने सर्व साधुओं का संमेलन हो जाय तो बहुत अच्छा हो। साथ के साधुओंने हाथ जोडके आप के विचारों का अनुमोदन किया।

संमेलन के लिये वडोदा खास पसंद किया गया। शेठ गोकलभाई झवेरी आदि भाग्यवान श्रावकों का भी इस काम में पूरा सहयोग होने से श्रावक लोग संघाडे के अग्रगण्य साधुओं के पास गये। उनके चरणों में अर्ज की।

दक्षिण, मालवा, गुजरात, सौराष्ट्र आदि प्रांतों से मुनिमहाराजाओ का पधारना शुरु हुआ, जिनमें मुख्य नाम इन महानुभावों के थे—

१००८ आचार्य श्रीमद्विजयकमलसूरिजी महाराज

१०८ उपाध्याय श्रीमद् वीरविजयजी म०

१०८ प्रवर्तक श्रीमत् कान्तिविजयजी म०

१०८ शान्तमूर्ति श्री हंसविजयजी म०

१०८ श्रीमद्विजयवल्लभसूरि म०

इस प्रकार ५० साधु महाराज एकत्र हुए। संमेलन को सफल करने का सबने प्रयत्न किया।

वडोदा के श्रीसंघने साधु साध्वी की भक्ति का और बाहिर गामों से आये हुए श्रावकों की भक्ति का पूर्ण लाभ लिया।

संमेलन के बाद सर्व मुनिराज अन्यत्र यथेच्छ क्षेत्रो में पधार गये।

पू. आ. श्री विजयकमलसूरिजी बडोदा में ही रहे। इस ग्रंथकालेखक भी उनके साथ था।

पू. आचार्य महाराज का नियम था कि चार मास प्रायः मौनावलंबी रहना इस लिये व्याख्यान का भार इस ग्रंथलेखक के उपर था।

मध्याह्न के समय-श्राद्धदिनकृत्य मुनियों को वंचाया जाता था।

उस चौमासे में पू. आचार्य म. सुदंसणचरियं विचारते थे तब उन पूज्यपुरुषोंने कहा ललितविजय! यह ग्रंथ मागधी भाषा में है अगर इसका अनुवाद संस्कृत में होजावे तो अनेक जीवों को इस उत्तम ग्रंथ के पठन-पाठन का लाभ मिले। उन महात्माओं की आज्ञा को शिरोधार्य कर के मैंने इस काम को शुरु किया। पहला भाग छप गया।

उसके बाद वि. सं. १९७१ से लेकर २००२ तक इस कार्य को हस्तगत नही किया किन्तु अनेक सज्जनों की प्रेरणा जारी रही उनकी प्रेरणा के वशवर्त्ती होकर दूसरा प्रस्ताव लिखा गया और ३० वर्ष पहेले छपे हुए प्रथम प्रस्ताव के साथ यह दूसरा प्रस्ताव प्रकट होता है। सज्जन महाशय स्खलना की क्षमा करे और सुधार कर वांचे।

निवेदक आचार्यदेवश्रीमद्विजयवल्लभसूरीश्वर चरणोपासक शिष्य

**विजयललितसूरि**

पालिताणा ( सिद्धक्षेत्र ) चै. सु. पंचमी।

श्री आत्मवल्लभ जैन ग्रंथ सिरीज नं १३.

वन्दे श्रीवीरमानन्दम्, वन्दे वल्लभसद्गुरुम् ॥

# सुदर्शनाचरित्र गद्यबंध.

लेखक-अज्ञानतिमिरतरणि, कलिकालकल्पतरु-आचार्यदेव १००८ श्रीमद्विजयवल्लभसूरीश्वर शिष्य प्रखरशिक्षाप्रचारक, मरुधरोद्धारक, आचार्य श्रीमद्विजयललितसूरिः ।

सहायक-मींयांगामनिवासि शेठ नाथालाल बेचरदास, ह. शेठ मूलचंद लखमीचंद पालेज.

वीर संवत् २४७४ आत्म संवत् ५२ विक्रम संवत् २००४

कींमत सदुपयोग